॥ श्रीगणेशायनमः ॥ ॥ अथयजुर्वेदोक्तनारायणबलिर्लिख्यते ॥ तत्रदौस्नानविधि
नास्नात्वायस्यकातीयप्रयोगः यथोक्तमृत्तिकामार्द्रंगोमयंचकुशान्कृष्णतिलान्सु
रभिपुष्पाण्यादायसुमना नद्यादिकंगत्वातत्तीरेशुचौपृथक्पृथक् स्थापयेत् ततःपा
णिपादंप्रक्षाल्यकुशहस्तोबद्धशिखोयज्ञोपविती आचामेत् ततः ॐउरु ॅहिराजावरु
णश्चकारसूर्यायपंथामन्वेतवाउ॥अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधाश्चित्
नमोवरुणायाभिष्ठितोवरुणस्यपाशः इतितोयमामंत्र्य ॐ येतेशतंवरुणयेसहस्रंयज्ञि
याःपाशाविततामहान्तः। तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःइति।
त्रिःप्रदक्षिणंजलमावर्तयेत् ततःसुमित्रियानआपओषधयःसंतुइतिजलांजलिमादाय
ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः।इतिद्वेष्यंप्रतिनिषिंचेत्।ततः क
टिंबस्त्यूरूजंघेचरणौकरौप्रत्येकंमृत्तोयाभ्यांत्रिस्त्रिःप्रक्षाल्य एकंपादंजलेऽपरंचस्थ

लेनिधायाचामेत्ततउदकंनमस्कृत्य ॐ तीर्थोंदकायनमइति ॐइदंविष्णुर्विंचक्रमेत्रे
धानिदधेपदम्।समूढमस्यपा॑ सुरे इतिमृत्तिकयांगानिसंस्पृश्यनाभिमात्रंजलंप्रवि
श्यआपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु।विश्व॑हिरिप्रंप्रवहंतिदेवीरिति
मंत्रेणसूर्याभिमुखोनिमज्जेत् ततः स्नात्वा ॐ उदिदाभ्यः शुचिरापूतएमिइतिनिम
ज्ज्योन्मज्ज्याचम्य ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोअश्वेषुरीरिषः
मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदमित्वाहवामहे इतिमंत्रेणगोमयेनांगानिवि
लिंपेत् ततः ॐ इमंम्मेवरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके १ ॐतत्वायामि
ब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोवरुणेहबोध्युरुश॑समान
आयुःप्रमोषीः २ ॐ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठो
वह्नितमःशोशुचानोविश्वाद्वेषा॑सिप्रमुमुग्ध्यस्मत् ३ ॐ सत्वन्नोअग्नेवमोभवोतीने

दिष्टोऽअस्याऽउषसोव्युष्टौ। अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधि४
ॐ मापोमोषधीर्हिꣳसीर्धाम्नोधाम्नोराजंस्ततोवरुणनोमुंच। यदाहुरघ्न्याइतिवरुणेतिश
पामहेततोवरुणनोमुंच५ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय अथा
वयमादित्यव्रतेतवानागसोअदितयेस्याम६ ॐ मुंचंतुमाशपथ्यदथोवरुण्यादुत अथो
यमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ७ ॐ अवभृथनिचुंपुणनिचेरुरसिनिचुंपुण:
अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्पाहि८इत्यष्टाभिर्मंत्रै
र्हस्तेनप्रत्येकंशिरसिजलंप्रक्षिपेत् ततोवहतिजलेप्रवाहाभिमुख: स्थिरेसूर्याभिमुखो
मौनीशनैरेवनिमज्जेत्ततआचम्य ॐ कारव्याहृतिगायत्रीभिरापोहिष्ठेत्यादितिसृ
भि: इदमाप:प्रवहतावद्यंचमलंचयत्। यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणंआपोमात
स्मादेनसपवमानश्चमुंचतु१ ॐ हविष्मतीरिमाआपोहविष्मांआविवासति। हविष्मा

यं॰ना॰ ॥ २ ॥

न्देवोऽअध्वरो हविष्माँअस्तुसूर्यः २ ॐ देवीरापोऽअपांनपाद्योवऽऊर्मिर्हविष्मऽइंद्रिया
वान्मदिन्तमः। तंदेवेभ्योदेवत्रादत्तशुक्रयेभ्योयेषांभागस्थस्वाहा ३ ॐकार्षिरसिसमु
द्रस्यत्वाक्षित्याऽउन्नयामि। समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ४ ॐ आपोदे
वामधुमतीरगृभ्णन्नूर्जस्वतीरोजस्वाश्चितानाः। याभिर्मित्रावरुणावभ्यषिंचन्याभिरिं
द्रमनयन्नत्येरातीः ५ ॐ द्रुपदादिवमुमुचानः स्विन्नः स्नातोमलादिव। पूतंपवित्रेणेवाज्य
मापःशुंधंतुमैनसः ६ ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये। शंयोरभिस्रवंतुनः ७ ॐ
अपा ᳪ रसमुद्वयस ᳪ सूर्येसंत ᳪ समाहितम्। अपा ᳪ रसस्ययो रसस्तंवो गृह्णाम्युत्त
ममुपयामगृहीतोसींद्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टतमम्। ८ ॐ आपोदे
वीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः
९ ॐ पुनंतुमापितरः सोम्यासः पुनन्तुमापितामहाः पुनंतुप्रपितामहाः पवित्रेणशता

बलिः ॥ २ ॥

युषा पुनन्तुमापितामहाः पुनंतुप्रपितामहाः पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै १०
ॐ अग्नऽआयू ꣳ षिपवसऽआसुवोर्जमिषंचनः आरेबाधस्वदुच्छुनाम् ११ ॐ पुनंतुमा
देवजनाःपुनंतुमनसाधियः। पुनंतुविश्वाभूतानिजातवेदःपुनीहिमा १२ ॐ पवित्रेणपु
नीहिमाशुक्रेणदेवदीद्यत्। अग्नेक्रत्वाक्रतू ꣳ रनु १३ ॐ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा
ब्रह्मतेनपुनातुमा १४ ॐ पवमानः सोअद्यनः पवित्रेणविचर्षणिः यः पोतासपुनातुमा
१५ ॐ उभाभ्यांदेवसवितःपवित्रेणसवेनच। मांपुनीहिविश्वतः १६ ॐ वैश्वदेवीमनतीदे
व्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः तयामदंतः सधमादेषुवय ꣳ स्यामपतयो
रयीणाम् १७ ॐ चित्पतिर्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्वच्छिद्रे
णपवित्रेणसूर्यस्यरश्मिभिः। तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामः पुनेतच्छकेयम्
१८ इतिप्रत्येकंमंत्रैः पुनरोंकारव्याहृतिगायत्रीभिरापोहिष्ठेतितिसृभिः कुशत्रयेण

मार्जनंकुर्यात ततः पूर्ववदिमंमेवरुणइत्याद्यष्टमंत्रैःशिरसिजलंक्षिपेत् ततः ऋष्यादि
कंस्मृत्वाजलेमग्नोऽघमर्षणंद्रुपदांवाआयंगौरितिवात्र्यृचंत्रिरावर्तयेत् वक्ष्यमाणमं
त्रैस्त्रिरावर्तैः प्राणायामंकुर्यात् ओंकारंवात्रिरावर्तयेत्विष्णुंवास्मरेत् ततः बहिराग
त्यवस्त्रादिधृत्वातिलकंकृत्वासंध्यावंदनादिकुर्यात्अथवापुराणोक्तस्नानविधिमपिकु
र्यात् तदनंतरंवस्त्रधारणादिकुर्यात् ॐ नमोनारायणायेतिमूलमंत्रेणसमंततश्चतु
र्हस्तंचतुरस्रंतीर्थंप्रकल्प्यतत्रगंगामावाहयेदेभिर्मंत्रैः विष्णोःपादात्प्रसूतासिवैष्णवी
विष्णुपूजिता।पाहिनस्त्वेनसस्तस्मादाजन्ममरणांतिकात्१ विष्णुपादाब्जसंभूतेगंगे
त्रिपथगामिनि।धर्मद्रवीतिविख्यातेपापंमेहरजाह्नविर तिस्रःकोट्योर्धकोटीचतीर्थानां
वायुरब्रवीत्। दिविभुव्यंतरिक्षेचतानितेसंतिजाह्नवि३नंदिनीत्येवतेनामदेवेषुनलिनी ॥ ३ ॥
तिच।वृंदापृथ्वीचसुभगाविश्वकायाशिवारिता ४ विद्याधरीसुप्रसन्नातथालोकप्रसा

दिनी। क्षमाच जाह्नवीचैवशांताशांतिप्रदायिनी ५। एतानिपुण्यनामानिस्नानकालेप्र
कीर्तयेत्। भवेत्संनिहितातस्यगंगात्रिपथगामिनी ६ इतिगंगामावाह्यततः पूर्वोक्तमूलमं
त्रेणकरसंपुटस्थितजलंसप्तवाराभिमंत्रितंत्रिचतुः पंचसप्तवारंवास्वमूर्ध्नि क्षिपेत्ततोमृ
त्तिकांगृहीत्वा ॐ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे। मृत्तिकेहरमेपापंयन्मयादुष्कृ
तंकृतम् १ उद्धृतासिवराहेणकृष्णेनशतबाहुना। नमस्तेसर्वलोकानांप्रभवारणिसुव्रते २
आरुह्यममगात्राणिसर्वपापंप्रमोचय ३ एभिः श्लोकैरामंत्र्यतयामृदागात्राण्यालभ्यम
ज्जनंकुर्यात् ॐ नमोनारायणेत्यारभ्यपौराणस्नानविधिः सर्ववर्णसाधारणः इत्याचारा
दर्शेस्नानविधिप्रयोगः॥ ततआचम्य ॐ तत्सदित्युच्चार्य अद्येत्यादिअमुकगोत्रस्यामु
कश्र्मतस्यऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टसंध्याशौचलोपाकृतस्नानमरणाशौच
मरणहरिनामोच्चारणवर्जितमरणपंचगव्यरहिताविकलपहृदयभाषादिचैतन्यम्लेच्छ

भाषादिवक्तव्यअस्पर्शनादिरक्तदर्शनअधर्मंधर्मंचिंतनविष्णुवर्जितअदत्तमरणअ
भावभावक्रियाकर्मरहितमार्जारमूषकादिस्पर्शतृणस्पर्शदृष्टिदोषद्वात्रिंशद्दोषापरच
तुःषष्टिदोषाष्टशल्यारजस्वलासंमार्जिनीसूतिकादिसंसर्गस्पर्शदृष्टिदोषपरिहारार्थंम
रणकालेतथादहनकालेअविधिकृतस्नानआचंद्रार्कयावत् यन्मरणांतकविशुद्ध्यर्थं
उपनयनपापपरिहारार्थंदेहशुद्ध्यर्थंमहापातकोपपातकतत्समानवर्जितानांगुरुल
घुपापानाम् आतुरावस्थायामभक्ष्यभक्षाभोज्यभोजनापेयपानाद्यगम्यागमनक्रि
यालोपोत्पन्नपरदेशपरज्ञातीयपरगृहेमरण अर्द्धदाहेजलेनचिताशमने दक्षिणाय
ने पंचकमध्येत्रिपुष्करयमलयोगे रात्रौ कृष्णपक्षे गुरुहीनेरुद्राक्षधात्रीतुलसीतिल
सर्षपगोपीचंदनगंगोदकस्नपनरहितशववाहे तथामार्गेशौचदेशेखर्परास्थिचर्मांमे ॥ ४ ॥
ध्यकेशादिस्पर्शेअतीर्थेपरकाष्ठे पराग्निदाहेमुखेआज्याहुतिरहितेकीटपतंगपाक्षिचि

तामध्येज्वलितादिदोषपरिहारार्थंकुगतिनिवारणार्थमुउत्तमलोकावाप्त्यर्थंनारायणब
ल्यधिकारासिद्ध्यर्थंपंचदशप्राजापत्यात्मकंप्रायाश्चित्तंप्रतिप्राजापत्यंगोमूल्यरजता
दिप्रत्याम्नायद्वारायथाकालेअहमाचरिष्ये होमजपादितीर्थयात्राद्वाराकुर्यात् अथ
वान्यःसंकल्पः कार्यःसयथा ॐ तत्सदित्यादि अमुकगोत्रस्यामुकप्रेतस्यशृंगिदंष्ट्रि
नखिशस्त्रघातसर्पजलमग्नकंठग्राहविषभक्षणाग्निदग्धविप्रमारितात्मघातचण्डालह
स्तमरणचौरमारितशत्रुमारितम्लेच्छादिमारिताष्टशल्यामरणवृक्षारोहणवन्दिग्रह
णपाशमरणविषूचिकाभूतशाकिनीत्यादिग्रहगृहशकटादिहतगजदन्तपर्वतारोहणा
दिविकलचित्तभ्रमाविकृत्यात्तपाषाणहतकुष्टव्याधिमरणमहारोगप्रपीडितक्षयव्या
धिमरणपापान्नपोषितमूत्रपुरीषस्थाशौचमरणापस्माररोगादिभगंदरगंडमालापांडु
रोगाद्यनेकदुष्टमरणदोषमध्येसंभावितदोषपरिहारार्थं कुगतिनिवारणार्थमुत्तमलो

कावाप्त्यर्थं नारायणबल्यधिकारसिद्ध्यर्थं अतिकृच्छ्रचांद्रायणद्वयम् अथवा पंच
दशप्राजापत्यात्मकंप्रायाश्चित्तं प्रतिप्राजापत्यंधेन्वादिदानरूपं यथाकालेऽहमाचरि
ष्ये जपहोमतीर्थयोजनयात्रादिद्वारावाकुर्यात् एवमूर्ध्वोच्छिष्टाधरोच्छिष्टोभयो
च्छिष्टास्पृश्यस्पृष्टखट्वास्तरणादिस्थमरणे पंचदशद्वादशषट्त्रीन्वाप्राजपत्या
न्कुर्यात् ॥ अथचैवंप्रयोगः ॥ ॥ ओंअद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्यसर्प
दष्टमृतस्यसर्पदष्टमरणजनितपापनिवृत्त्यर्थं असद्गतिनिवारणार्थम् उत्तमलोकप्रा
प्त्यर्थं नारायणबल्यधिकारसिद्ध्यर्थंपंचदशप्राजापत्यात्मकंप्रायश्चित्तंप्रतिप्राजाप
त्यंगोमूल्यादियथाकालेयथाशक्तिअहमाचरिष्ये अथान्यएवंसंकल्पः ॐ तत्सदि
त्युच्चार्याद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यमरणक्षणेप्राणोत्क्रांतिसमयेस्पर्शास्पर्श
विदेशमरणाष्टशल्योपरिमरणाधरोच्छिष्टोर्ध्वोच्छिष्टोभयोच्छिष्टम्लेच्छादिहस्त

शस्त्राघातविषादिदोषान्यदुर्मरणजनितदोषनिवृत्त्यर्थं विष्णुलोकप्राप्त्यर्थंदाल्भ्यो
क्तप्रायश्चित्तं नारायणबलिकर्माधिकारासिद्ध्यर्थंपंचचत्वारिंशत्प्राजापत्यात्मकं प्रा
यश्चित्तं प्रतिप्राजापत्यं गोदानप्रत्याम्नायद्वारायथाशक्तिअहमाचरिष्ये प्रायश्चित्तं
संकल्पानुसारेणसर्वंकृत्वा ततःपुनराचम्य ॐ तत्सदद्येत्याद्युच्चार्य अमुकगोत्रस्या
मुकदुर्मरणदोषपरिहारार्थमुत्तमलोकप्राप्त्यर्थं नारायणबलिंकरिष्येइतिसंकल्पंकृ
त्वा पुनस्तिथ्याद्युक्त्वामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तनारायणबलिपूर्वा
गभूतं श्रीमहाविष्णोः षोडशोपचारैः पूजनमहंकरिष्ये इतिसंकल्प्य।पूजांकुर्यात्॥
तद्यथा आदौपुरुषसूक्तेन। हस्तयोः पादयोर्जान्वोः कट्योर्नाभौहृदिक्रमात्। कंठे
बाह्वोर्मुखेनेत्रेमूर्ध्निवामांगतोन्यसेत् स्वशरीरेतथादेवांगेचन्यासः ॐ सहस्रशीर्षा॰
वामहस्ते। पुरुषएवेदꣳ॰ दक्षिणहस्ते। एतावानस्य॰ वामपादे।त्रिपादूर्ध्व॰ दक्षिण

 पादे।ततोविराडजा०वामजानुनि।तस्माद्यज्ञात्सर्वहुतः संभृतं० दक्षिणजानुनि।तस्मा 
 द्यज्ञात्सर्वहुतऋचः०वामकट्याम्।तस्मादश्वा०दक्षिणकट्याम्। तंयज्ञं०नाभौ। यत्पु
रुषं० हृदये। ब्राह्मणोस्य०कंठे। चंद्रमा० वामबाहौ। नाभ्याआसीत्० दक्षिणबाहौ।
यत्पुरुषेण० मुखे। सप्तास्यासन्० नेत्रयोः। यज्ञेन० मूर्ध्नि।एवंयथादेहेतथादेवेन्यासं
कृत्वापूजनंकुर्यात् यथा सहस्र शीर्षा० आगच्छदेवदेवेशसंसारार्तिविनाशन।पूजार्थं
त्वंजगन्नाथकुरुमेबहुधाकृपाम् इत्यावाहनम् १ ॐ पुरुषएवेद२० नानारत्नमयेदिव्ये
सुनंदाद्युपलक्षिते। एहित्वमासनेविष्णोपट्टवस्त्रविभूषिते इत्यासनम् २ ॐएतावान
स्य० वस्त्रपूतंशुभंवारिशंखेकृत्वाजगद्गुरो। मयानिवेदितंभक्त्याकुरुपाद्यंकृपांविभो
इतिपाद्यम् ३ त्रिपादूर्ध्व०वनमालिन्जगन्नाथशंखचक्रगदाधर।रुक्मिणीसहितस्त्वं 
हिगृहाणार्घ्यमिदंहरे इत्यर्घ्यम् ४ ॐ ततोविराड० भक्त्यासमर्पितंदेवतुभ्यंमेपरमा

त्मने।वासुदेवायनित्यायगृहाणाचमनंविभो इत्याचमनम्५ॐ तस्माद्यज्ञात्सर्वहुतः
संभृतम्० पुण्यतीर्थोदकेनाथपंचामृतयुतेनवा । चंदनेनाभिमिश्रेणकुरुस्नानंजगत्प्र
भो इतिस्नानम् ६ ॐ तस्माद्यज्ञात्सर्वहुतऋचः० शुभ्रंनानाविधंदेवमहार्घंदिव्यमद्भु
तम्।वस्त्रंगृहाणदेवेशपवित्रंधौतमुज्ज्वलम् इतिवस्त्रम् । ७ ॐ तस्मादश्वा०नवतंतुक
मेवेदंबाहुमूलोपरिस्थितम्।भक्त्यासमर्पितंतुभ्यमुपवीतंगृहाणवै इत्युपवीतम् ८ ॐ
तंयज्ञं० श्रीखंडंदेवदेवेशसुगंधमतिवल्लभम् । गृहाणपरमानंदबहुमूल्यंसुकुंकुमम् ।
इतिचंदनम् ९ ॐ यत्पुरुषं० वल्लभातेजगन्नाथकोमलातिमनोहराम्। गृहाणतुलसीं
विष्णोययासंतोषितोभुवि माल्यादीनि० इतिमाल्यम्१०ॐ ब्राह्मणोस्य०श्रीखंडा
दियुतंदिव्यंकृष्णागुरुविमिश्रितम्।भक्त्यासमर्पितंधूपंगृहाणजगदीश्वर इतिधूपम्।
११ ॐ चंद्रमामनसो० घृतवर्तियुतंदिव्यंरत्नरूपंतमोपहम् । भक्त्यासमर्पितंदीपं

 गृहाणपुरुषोत्तम इतिदीपम् १२ ॐनाभ्याआसीदं० विपक्वंघृतदुग्धाभ्यांशर्करादियुतं 
 महत्।नानाविधंतुनैवेद्यंगृहाणयदुनंदन इतिनैवेद्यं १३ ॐयत्पुरुषेण० नमःसर्वहितार्था
यजगदाधारहेतवे।साष्टांगोयंप्रणामस्तेदीनत्वेनमयाकृतः इतिनमस्कारः १४ ॐ स
प्तास्यासन्० हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः।अनंतपुण्यफलदमतः शांतिंप्रय
च्छमे।पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम्।इति
दक्षिणामुखवासंच १५ ॐयज्ञेनयज्ञ० यानिकानिचपापानिब्रह्महत्यासमानिच।तानि
सर्वाणिनश्यंतिप्रदक्षिणपदेपदे॥आवाहनंनजानामिनजानामिविसर्जनम् पूजांचैवन
जानामिशरणंमेभवाच्युत इतिप्रदक्षिणांपुष्पांजलिंच १६ एतत्कृतंयद्विष्णुपूजनंते
नप्रेतस्यविमुक्तिरस्तु श्रीविष्णुःप्रीणातु ततआचार्यादीनांवरणंकार्यं स्वयंप्राङ्मु 
खउदङ्मुखंगुरुं ॐ साधुभवानास्तामितिवदेत् ॐ साध्वहमासमितिप्रतिवचनम्

ॐ अर्चयिष्यामोभवंतं ॐ अर्चयेतिप्रतिवचनं ततोगंधपुष्पवस्त्रयुग्महेमालंकरणा
दिनागुरुमलंकृत्यदक्षिणंजानुंधृत्वा ॐ तत्सदद्येत्याद्युच्चार्य अमुकगोत्रस्यामु
कप्रेतस्यात्महत्यादिनावापाषंडत्वादिनावाजनितपापशमनार्थं अमुकदुर्मरणानिमि
त्तदोषनिवृत्तिपूर्वकौर्ध्वदेहिकसंप्रदानयोग्यतासिद्ध्यर्थं नारायणबलिकर्मणि
अमुकगोत्रममुकशर्माणंब्राह्मणमेभिश्चंदनपुष्पाद्यलंकरणवासोभिराचार्यत्वेनत्वा
महंवृणे ॐवृतोस्मीतिप्रतिवचनम् एवंचतुर्णांऋत्विजांवरणंकुर्यात् ॐ अस्ययाग
स्यनिष्पत्त्यैभवंतोऽभ्यर्थितामया। सुप्रसादेनकर्त्तव्यंकर्मेदंविधिपूर्वकम् प्रतिवचनं
करिष्यामः आचार्याग्रेनालिकेरंनिधायप्रणम्य ततःपूर्वस्यांदिशिस्थंडिलेश्वेतव
स्त्रोपरितंडुलेनाष्टदलंकृत्वातत्रपूर्वाद्यष्टादिक्षुअष्टशक्तीनांस्थापनम् पूर्वे ॐ रुक्मि
णीहागच्छेहतिष्ठरुक्मिण्यैनमः रुक्मिणींस्थापयामि १ आग्नेय्याम् ॐ सत्यभा

 मेइहा ० २ दक्षिणे ॐ जांबवतीहा० ३ नैर्ऋत्ये ॐ नाग्नजितेइहागच्छेह 
 तिष्ठ० ४ पश्चिमे ॐ कालिंदीहा० ५ वायव्ये ॐ मित्रविंदेइहा ० ६ उत्तरे ॐ
लक्ष्मणेइहा० ७ ईशान्यां ॐ कैकेयीहागच्छेहतिष्ठ० ८ मध्येकलशं संस्थाप्य
तत्रसत्येशस्थापनं तद्यथा ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुव
नस्यधर्त्री।पृथिवींयच्छपृथिवींदृ २ हपृथिवीम्माहि २ सीः इतिकलशाधारभूमिं
स्पृष्ट्वा ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वादीर्घामनुप्रसि
तिमायुषेधान्देवोवः सविताहिरण्यपाणिः। प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वाम
हीनांपयोसिइतिकलशाधारधान्यमभिमंत्र्य ॐ आजिघ्रकलशंमह्यात्वाविशंत्वि
न्दवः । पुनरूर्जानिवर्त्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः इति 
ताम्रकलस्थापनम् ॐ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्य ऽ

ऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्य ऋतसदनमासीदइति कलशज
लमापूर्य ॐ त्वांगंधर्वाअखनस्त्वामिन्द्रस्त्वांबृहस्पतिः त्वामोषधेसोमोराजाव्वि
द्वान्यक्ष्मादमुच्यतइतिगंधम् ॐ याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुब
भ्रूणामह २ शतंधामानिसप्तच इतिसर्वौषधीः ॐ कांडात्कांडात्प्ररोहंतीपरुषःपुरु
षस्परि।एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच इतिदूर्वाः ॐ अश्वत्थेवोनिषदनंपर्णेवो
व्वसतिष्कृता। गोभाजइत्किलासथयत्सनवथपूरुषम् इतिपंचपल्लवान् ॐ स्योना
पृथिविनोभवानृक्षरानिवेशनी। यच्छानःशर्मसप्रथाः इतिपंचसप्तवामृदः ॐ याः
फलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्व २ हसः
इतिफलम् ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत्।दधद्रत्नानिदाशुषे इतिपंचर
त्नानि ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् । सदाधारपृथिवीं

ह्यामुतेमांकस्मैदेवायहविषाविधेमइतिहिरण्यम् ॐ सुजातोज्योतिषासहशर्मवरूथ
मासदत्स्वः। व्वासोअग्नेविश्वरूप ꣳ संव्ययस्वविभावसो इतिवस्त्रम् ॐ पूर्णादर्विप
रापतसुपूर्णापुनरापत। वस्नेवव्विक्रीणावहाइषमूर्ज ꣳ शतक्रतो इतिधान्यपूर्णपात्रं
निधाय तदुपरिसुवर्णमयींसत्येशमूर्तिंअग्न्युत्तारणंकृत्वास्थापयेत् तत्रवह्निसूक्तंप
परशुरामेणोक्तं समुद्रस्यहिमस्यत्वाअपामिदंनमस्तऋक् प्राणदापंचभिर्ऋग्भिर्वह्नि
सूक्तमुदाहृतम् मूर्तिंपात्रेनिधाय तदुपरिदुग्धधारांजलधरांचपातयेत् सूक्तंवार
द्वयंपठेत् ॐ समुद्रस्यत्वाकवयाग्नेपरिव्ययामसि। पावकोऽअस्मभ्य ꣳ शिवो
भव १ हिमस्यत्वाजरायूणाग्नेपरिव्ययामसि। पावकोऽअस्मभ्य ꣳ शिवोभव २
अपामिदंन्ययन ꣳ समुद्रस्यनिवेशनम्। अन्याँस्तेअस्मात्तपंतुहेतयः पावको
अस्मभ्य ꣳ शिवोभव ३ नमस्तेहरतेशोचिषेनमस्तेअस्त्वर्चिषे। अन्याँस्ते

अस्मत्तपंतुहेतयः पावकोअस्मभ्य ꣳ शिवोभव ४ प्राणदाअपानदाव्यानदाव्व
र्चोदाव्वरिवोदाः। अन्याँस्तेअस्मत्तपंतुहेतयः पावकोअस्मभ्य ꣳ शिवोभव ५ पंचा
मृतेनस्नानं कारयेत् तन्मंत्राः ॐ पयः पृथिव्यांपयओषधीषुपयोदिव्यंतरिक्षेपयो
धाः पयस्वतीः प्रदिशः संतुमह्यम् इति पयसा १ ॐ दधिक्राव्णोअकारिषंजिष्णोर
श्वस्यव्वाजिनः। सुरभिनोमुखाकरत्प्रणआयू ꣳ षितारिषत् इतिदध्ना २ ॐ घृतंघृ
तपावानः पिबतवसांवसापावानः पिबतांतरिक्षस्यहविरसिस्वाहा। दिशः प्रदिशआदि
शोव्विदिशउद्दिशोदिग्भ्यः स्वाहा इतिघृतेन ३ ॐ मधुव्वाताऋतायतेमधुक्षरंति
सिंधवः माध्वीर्नः संत्वोषधीः इतिमधुना ४ ॐ अपा ꣳ रसमुद्वयस ꣳ सूर्येसंत ꣳ
समाहितम् अपा ꣳ रसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसींद्रायत्वाजुष्टंगृ
ह्णाम्येपतेयोनिरिंद्रायत्वाजुष्टतमम् इतिशर्करया ५ ॐ आपोहिष्ठामयोभुवस्तान

य०ना०

॥१०॥

ऊर्जेदधातन। महेरणायचक्षसे १ योवः शिवतमोरसस्तस्यभाजयतेहनः। उशतीरिव मातरः २ तस्माअरंगमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः ३ इतिशुद्धोदकेनसंस्नाप्य स्थापितकलशोपरि संस्थाप्य ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञ ँ समिमंदधातु। विश्वेदेवासऽइहमादयंतामोंप्रतिष्ठ १ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजंतेसर्वमेव प्रतिष्ठितंभवति २ अष्टशक्तिसहितः सत्येशःसुप्रतिष्ठितोभव ओंअद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तनारायणबालिकर्मांगभूतंसत्येशपूजनंकरिष्ये तद्यथा उर्व्यांक्षीसमुद्रेऽस्मिन्व्योम्निसत्येचसंस्थिता। अत्रत्वंसत्यया सार्द्धंसत्येशभवसन्निधौ १ अष्टशक्तिसहितायसत्येशायनमः आवाहनम् १ सोमसूर्याग्निसंकाशंपद्ममष्टदलान्वितम्। आसनंगृह्णसत्येशत्रैलोक्यस्थितिकारण इतिआसनम् २ रत्नाभरणसर्वांगसर्वदेवनमस्कृत। पाद्यंगृहाणदेवे

बलिः

॥१०॥

शगंधपुष्पाक्षतैर्युतम इतिपाद्यम् ३ सत्येशसुखभूयिष्ठसत्येशसुखदायक । सत्ये
शसत्यययायुक्तगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यम् ४ गंगाजलसमानीतंसुवर्णकलशोस्थि
तम्।गृहाणाचमनंदेवत्रैलोक्यस्यापिपावनं इत्याचमनम् ५क्षीरसागरकल्लोलैः स्नाहि
पापनिषूदन।पाहिमांभूतभव्येशशीतेनजलबिंदुना इतिस्नानम् ६ हरस्वसर्वदुरितंयेना
हंवेष्टितोहरे।वस्त्रेणानेनशुभ्रेणसत्येशकुरुवांछितम इतिवस्त्रम् ७ यज्ञेयोगेतथासांख्ये
पवित्रस्त्वंसदोच्यते।यज्ञोपवीतदानेनकुरुमांसर्वपावनम् इतियज्ञोपवीतम् ८सुगंधंचंद
नंदिव्यंकेशरागरुसंयुतम्।विलेपनंसुरश्रेष्ठसर्वपापहरोभव इतिचंदनम् ९ सत्यनामन्न
मस्तुभ्यंमूर्तामूर्तस्वरूपिणे । वासुदेवनृसिंहाख्यकपिलादित्यभूधर॥संकर्षणमहावीर
प्रद्युम्नामितविक्रम।अनिरुद्धेशगोविंदशार्ङ्गिश्चक्रिन्नमोस्तुते॥वराहाच्युतयज्ञेशलक्ष्मी
कांतामृतेश्वर।पुत्रपौत्रप्रदस्त्वंचपापशत्रोनिरंजन इतिपुष्पम् १० शक्तिवृंदयुतोदेवपू

य०ना०

॥११॥

जाधूपंसुरेश्वर।गृहाणत्वंतुसत्येशसत्ययासहरक्षमां इतिधूपं ११ज्योतीरूपमरूपंत्वां
वदंतिमुनिपुंगवाः।ज्योतिर्मध्येस्थितोदेवदीपंगृह्णनमोस्तुते इतिदीपं १२त्रातात्वमेव
सत्येशसत्येयासहचिंत्यसे।गृहाणदेवदेवेशममनैवेद्यमुत्तमम् इतिनैवेद्यम् १३नाराय
णनमस्तेस्तुवासुदेवनमोनमः।त्रैलोक्यजगदाधारत्राहिमांमधुसूधन इतिनमस्कारः
१४नारायणसुराधीशपुराणपुरुषोत्तम।पापोपशमनार्थाय प्रीत्यर्थंप्रतिगृह्यतां इतिप्र
दक्षिणा १५अनेकजन्मसंभूतंपापंचैवसुरेश्वर।मयादत्ताध्यंदानेनभुक्तिमुक्तिप्रदो भव
इतिदक्षिणा १६ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच । त्वमेवसर्वज्योतींषिआर्ति
क्यंप्रतिगृह्यतां इतिआर्तिक्यं १७ पूगीफलंसकर्पूरंतांबूलंसुमनोहरम् पवित्रीकरणंनि
त्यंतांबूलंप्रतिगृह्यतां इतितांबूलं १८प्रभोसत्येशसद्योनेविभोविष्णोसुरेश्वर पुत्रपौत्रप्र
दोविष्णुःपापशत्रोनिरंजन इतिनीराजनं १९ अनिरुद्धेशगोविंदविष्णोचक्रिन्नमोस्तुते

बलिः

॥११॥

पूजांगृहाणदेवेशप्रीयतां गरुडध्वज इतिप्रणामः ॥ ततःपूर्वोक्तानामष्टशक्तीनां पूजनं अथप्रार्थना अपराधसहस्राणिलक्षकोटियुतानिच।नश्यंतितत्क्षणात्पापंसत्येशस्यच पूजनात्।सत्येशपंचवक्रस्त्वंलक्ष्मासहजगत्पतिः।वासुदेवः स्थितः पूर्वेनृसिंहोदक्षिणे स्थितः॥कपिलः पश्चिमास्येतुवराहश्चोत्तरेस्थितः। ऊर्ध्ववक्रेच्युतम्। ज्ञेयएतद्दैवक्र पंचकम्। सत्येशसंस्थितंराजन्पूजाकालेसदैवहि। क्षीरोदपाथेचंद्रस्थपद्मकर्णिक संस्थितम्। पद्मकामोदकीशंखचक्राण्यस्त्राणिधारिणम्। इतिप्रार्थना। अथना लिकेरेणार्घ्यदानम्। यज्ञेशाच्युतदेवेशसत्यरूपसनातन। अनेनार्घ्यप्रदानेनसर्व पापाद्विमोचय १ सत्येशायनमस्तुभ्यं पापहापरमेश्वरः। मयादत्तार्घ्यदानेनप्रे तमुक्तिप्रदोभव २ इत्यर्घ्यंदद्यात्॥ एतत्कृतंयत्सत्येशपूजनंतेनश्रीशत्येशः प्रीणा तु। ततोग्निस्थापनंकुर्यात् ॐ अद्यनारायणबलिहोमकर्माणिपंचभूसंस्कारपूर्वकम

यं०ना० ग्निस्थापनमहंकरिष्ये तत्रकुशैर्हस्तपरिमितचतुरस्रभूमिंपरिसमुह्यतानैशान्यांनिक्षि बलिः
॥१२॥ प्यगोमयोदकेनोपलिप्य स्फ्येनस्रुवमूलेनवाप्रादेशमात्रमुत्तरोत्तरक्रमेणप्रागग्रंत्रिरु
ल्लिख्यउल्लेखनक्रमेणानामिकांगुष्ठाभ्यामृदंसमुद्धृत्यवारिणातंदेशमभ्युक्ष्यकांस्य
पात्रस्थंवह्निंप्रत्यङ्मुखमुपसमाधाय ततोग्नेर्दक्षिणतःप्राक्संस्थमेवभूरसीत्यादिपूर्वो
क्तमंत्रैःपंचकलशान्संस्थाप्य तेषुपंचमूर्तयः कृताग्न्युत्तारणाःपंचामृतेनस्नापिताः प्र
तिष्ठाप्यावाहनंकुर्यात् ब्रह्मारौप्यमयोदेवोविष्णुःस्वर्णमयःस्मृतः। रुद्रस्ताम्रमयोदे
वोयमोलोहमयःस्मृतः॥ प्रेतस्त्रपुमयःशुभ्रोथवालोहमयःस्मृतः।यद्वा कुशमयाह्येते
स्थाप्याश्चैवपृथक्पृथक्॥तत्रावाहनमंत्राः ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं
होतारंरत्नधातमं॥ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूरइषव्योति ॥१२॥
व्याधीमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषाजिष्णूरथेष्ठाः सभे

योयुवास्ययजमानस्यवीरोजायतांनिकामेनिकामेनःपर्जन्योव्वर्षतु फलवत्योनओ
षधयःपच्यंतांयोगक्षेमोनःकल्पतां अस्मिन्कलशेब्रह्मन्इहागच्छेहतिष्ठब्रह्मणेनमः
ब्रह्माणंस्थापयामि १ ॐ ईषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायक
र्मणआप्यायध्वमघ्न्याइंद्रायभागंप्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघशं
सोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॐइदंविष्णुर्विचक्रमेत्रेधा
निदधेपदंसमूढमस्यपांसुरेअस्मिन्कलशेविष्णोइहागच्छेहतिष्ठ०२ ॐ अग्नआया
हिवीतयेगृणानोहव्यदातये निहोतासत्सिबर्हिषि नमःशंभवायचमयोभवायच नमः
शंकरायचमयस्करायचनमःशिवायचशिवतरायच अस्मिन्कलशेरुद्रेहागच्छेह
तिष्ठ ३ ॐ शंनोदेवीरभिष्टयऽआपोभवंतुपीतये शंय्योरभिस्रवंतुनः यमायत्वामखा
यत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्यः सःस्पृशस्पाहि अर्चिरसि

य०ना०

॥१३॥

शोचिरसितपोसि अस्मिनकलशेयमेहागच्छेहतिष्ठ० ४ ॐ अक्रन्कर्मकर्मकृतःस

हव्वाचामयोभुवादेवेभ्यःकर्मकृत्वास्तंप्रेतसचाभुवः प्रेताजयतानरइंद्रोवःशर्मयच्छ

तु उग्रावःसंतुबाहवोनाधृष्यायथासथ अपसव्यं अमुकगोत्रामुकप्रेतविष्णुरूपास्मि

न्कलशेइहागच्छेहतिष्ठ०५एवंपंचदेवतानांस्थापनंकृत्वा मनोज्योर्जुषतामाज्यस्य

बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञंसमिमंदधातुविश्वेदेवासइहमादयंतामोंप्रतिष्ठ

तिप्रतिष्ठाप्य ततोब्रह्मादिचतुष्टयदेवतानांसव्येन प्रेतस्यनामगोत्रोच्चारणपूर्वकमप

सव्येनावाहनादिषोडशोपचारैर्वाप्रत्येकंसंपूज्य एतत्कृतंयद्ब्रह्मादिपंचदेवतानांपूज

नंतेनब्रह्मादयःप्रीणंतु न्यूनंसंपूर्णमस्तु विष्णुंस्तुवीत जितंतेपुंडरीकाक्षनमस्तेवि

श्वभावन नमस्तुभ्यंहृषीकेशमहापुरुषपूर्वज अनादिनिधनोदेवःशंखचक्रगदाधरः

अक्षयःपुंडरीकाक्षःप्रेतमोक्षप्रदोभवइतिस्तुत्वा ॐ अद्यकर्तव्यनारायणबलिहोमक

बलिः

॥१३॥

र्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्प
चंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणेइतिब्रह्माणंवृणुयात् ॐ वृतोस्मीतिप्रतिवच
नं ॐयथाविहितंकर्मकुर्वितियजमानेनोक्ते ॐ करवाणीतितेनोक्तेअग्नेर्दक्षिणतःशु
द्धमासनंनिधायतदुपरिप्रागग्रान्कुशानास्तीर्य अग्नेप्रदक्षिणंकारयित्वाब्रह्माणमुद
ङ्मुखंतत्रोपवेश्यास्मिन्नारायणबलिकर्मणित्वंमेब्रह्माभवइत्यभिधायॐभवानीतिते
नोक्तेप्रणीतार्थंप्रागग्रैःकुशैरग्नेरुत्तरतआसनद्वयंकल्पयित्वा प्रणीतापात्रंपुरतः कृत्वा
वारिणापरिपूर्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्यपश्चिमासनेनिधायालभ्य पूर्वास
नेस्थापयित्वा। ततःपरिस्तरणंबर्हिषश्चतुर्थंभागमादायाग्नेरीशानांतंब्रह्मणोग्निपर्यंतंनै
र्ऋत्याद्वायव्यांतमग्नितःप्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुश
त्रयंपवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयं प्रोक्षणीपात्रंआज्यस्थाली चरुस्थाली

मार्जनसंकुशाउपयमनकुशाः प्रादेशमितपालाशसमिधस्तिस्रः स्रुवः अत्रदाल्भ्येना
ज्यहोमेचतुर्गृहीतहोमोक्तत्वात् तथाचरुहोममपिचतुर्गृहीतेनैवोक्तत्वात्तद्धोमार्थंबाहु
मात्रास्रुक् आज्यं षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णपात्रंचर्व
र्थास्तंडुलाः एतानिपवित्रच्छेदनकुशानांपूर्वंपूर्वंदिशिक्रमेणासादनीयानि ततःपवित्र
छेदनकुशैः यजमानप्रादेशमितपवित्रछेदनं सपवित्रकरेणप्रणीतोदकंत्रिःप्रोक्षणीपात्रे
निधायद्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रेपवित्रेगृहीत्वात्रिरुत्पवनंततःप्रोक्षणीपात्रं
सव्यहस्तेनगृहीत्वादक्षिणाऽनामिकांगुष्ठाभ्यांपवित्रेगृहीत्वात्रिरुद्गिंगनं। ततःप्रणीतो
दकेनप्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तुसेचनम्। आज्यस्थाल्यादी
निपूर्णपात्रपर्यंतानि अग्निप्रणितयोर्मध्येप्रोक्षणीपात्रंनिदध्यात्। ततआज्यस्थाल्या
माज्यंनिरूप्यप्रणीतोदकेनतंडुलान्प्रक्षाल्यचरौप्रणीतोदकंदत्त्वा तत्रतंडुलान्प्रक्षि
प्यस्वयंचरुंगृहीत्वाब्रह्माचाज्यवन्ह्युत्तरतश्चरुंदक्षिणतआज्यंनिदध्यात्। ततःसि

ह्वेचरौतृणादिप्रज्वाल्यउभयोरुपरिप्रदक्षिणंभ्रामयित्वावह्नौतत्प्रक्षेपः । ततस्त्रिःस्रु
वप्रतपनं । संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतःस्रुवंसंमृज्यप्रणीतोदकेनाभ्युक्ष्य
पुनस्त्रिःप्रतप्यदक्षिणतोनिदध्यात् । एवंस्रुङ्मेक्षणयोरपिप्रतपनसंमार्जनेकृत्वा स्रु
वादुत्तरतःस्थापयेत् ततआज्यमग्नितश्चरोःपूर्वेणानीयाग्रेधृत्वा आज्यात्पश्चिमेन
चरुमानीयाज्यस्योत्तरतोनिदध्यात्।ततआज्यस्यप्रोक्षणीवत्त्रिरुत्पवनम् अवेक्ष्यस
त्यपद्रव्येतन्निरसनं ततःप्रोक्षण्युत्पवनं ततउत्थायउपयमनकुशान्वामहस्तेकृत्वाप्र
जापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्तमूलाःसमिधःप्रक्षिपेत् । ततउपविश्यसपवि
त्रप्रोक्षण्युदकेनप्रदक्षिणक्रमेणाग्निंपर्युक्ष्य प्रणीतापात्रेनिधायब्रह्मणान्वारब्धःपातित
दक्षिणजानुःसमिद्धतमेऽग्नौजुहुयात् । तत्रप्रथमाहुतिचतुष्टयेतत्तदाहुत्यनंतरंस्रुवाव
स्थितहुतशेषस्यप्रोक्षणीपात्रेप्रक्षेपः प्रजापतयेस्वाहा उत्तरपूर्वार्द्धेइदंप्रजापतये० ।

इतित्यागंविधाय मनस्येवप्रजापतिहोमः सर्वत्र।ॐ इंद्रायस्वाहा इदमिंद्राय० दक्षि
णपूर्वार्द्धे इत्याघारौ। ॐ अग्नयेस्वाहाउत्तरतःइदमग्नये०। ॐ सोमायस्वाहाअग्नेर्द
क्षिणप्रदेशेइदंसोमायेतित्यागः इत्याज्यभागौ।अथप्रधानहोमः५११४० युंजतेनुवा
केनचतुर्गृहीताज्येनस्रुचाजुहुयात् ॐ युंजतेमनऽउतयुंजतेधियोविप्राविप्रस्यबृहतो
विपश्चितः। विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिःस्वाहा १ इदंवि
ष्णवे० इतित्यागस्सर्वत्रोत्तरमंत्रेषुच ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्य
पाᳬंसुरेस्वाहा २ ॐ इरावतीधेनुमतीहिभूतᳬंसूयवसिनीमनवेदशस्य।व्यस्कभ्नारो
दसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा।३ ॐ देवश्रुतौदेवेष्वाघोषतंप्राची
प्रेतमध्वरंकल्पयंति उर्ध्वंयज्ञंनयतंमा।जिह्वरतंस्वंगोष्ठमावदतंदेवीदुर्गेआदुर्मानिर्वा
दिष्टप्रजांमानिर्वादिष्टमत्ररमेथांवर्ष्मन्पृथिव्याःस्वाहा ४ ॐ विष्णोर्नुकंवीर्याणिप्र

वीचंयः पार्थिवानिविममेरजाꣳ सि।यो ऽअस्कभायदुत्तरꣳ सधस्थंविचक्रमाणस्त्रेधोरु
गायोविष्णवेत्वास्वाहा५ ॐ दिवोवाविष्णउतवापृथिव्यामहोवाविष्णउरोरंतरिक्षात्
उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वास्वाहा ६ ॐ प्रताद्वि
ष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुव
नानिविश्वास्वाहा ७ॐविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवो
सि वैष्णवमसिविष्णवेत्वास्वाहा८अथस्रुवेणाज्याहुतयः ॐलोमभ्यःस्वाहा।२।१।ॐ
त्वग्भ्यःस्वाहा २ ॥ २ ॥ ॐ लोहितायस्वाहा २ ॥ ३ ॥ ॐ मेदोभ्यःस्वाहा २ ॥४ ॥ ॐ
माꣳसेभ्यःस्वाहा २ ॥ ५ ॥ ॐस्नावभ्यःस्वाहा २ ।६॥ ॐ अस्थिभ्यःस्वाहा २ । ७ ।ॐ
मज्जाभ्यःस्वाहा २ ॥ ८ ॥प्रत्येकंयथामंत्रंत्यागः इतिषोडशाज्याहुतयः ॥ ॐ रेतसे
स्वाहा ॥ १ ॥ १ ॥ ॐ पायवेस्वाहा ॥ १ ॥ २ ॥ ॐ आयासायस्वाहा ॥ १ ॥

य०ना० ॥ ३ ॥ ॐ प्रयासायस्वाहा १ ॥ ४ ॥ ॐ संयासायस्वाहा ॥ १ ॥ ५ ॥ ॐ बलिः
॥१६॥ वियासायस्वाहाः ॥ १ ॥ ६ ॥ ॐ उद्यासायस्वाहा ॥ १ ॥ ७ ॥ ॐ शुचेस्वाहा
१ ॥ ८ ॥ ॐ शोचतेस्वाहा १ ॥९॥ ॐ शोचमानायस्वाहा १॥१०॥ ॐ शोकाय
स्वाहा १ ॥ ११ ॥ ॐ तपसेस्वाहा १ ॥ १२ ॥ ॐ तप्यतेस्वाहा १ ॥ १३ ॥ ॐ
तप्यमानायस्वाहा १ ॥ १४ ॥ ॐ तप्तायस्वाहा १ ।१५॥ ॐ धर्मायस्वाहा १ ॥१६ ॥
ॐ निष्कृत्यैस्वाहा १ ।१७॥ ॐ प्रायश्चित्त्यैस्वाहा १ । १८॥ ॐ भेषजायस्वाहा १।
१९ ॥ ॐ यमायस्वाहा १ । २० ॥ ॐ अंतकायस्वाहा १ । २१ ॥ ॐ मृत्यवेस्वाहा १।
२२॥ ॐ ब्रह्मणेस्वाहा १।२३ ॐ॥ ब्रह्महत्यायैस्वाहा १ ॥२४॥ ॐ विश्वेभ्योदेवेभ्यः ।
स्वाहा १॥२५॥ ॐ द्यावापृथिवीभ्या ँ स्वाहा १।२६। इतिमंत्रैराज्यंहुत्वायथामंत्रत्या ॥१६॥
गः ॥ततः पुरुषसूक्तेन षोडशाज्याहुतीर्हुत्वा तद्यथा ॐ सहस्रशीर्षा० गुल ँ स्वाहा। इदं

विष्णवेनममइतित्यागःसर्वत्र १।ॐ पुरुषएवेदं॰ तिस्वाहा२।ॐएतावा॰ दिविस्वा
हा ३ ॐ त्रिपादूर्ध्व॰ अभिस्वाहा४ ॐ ततोविरा॰ पुरःस्वाहा ५ ॐ तस्माद्यज्ञात्सर्व
हुतःसंभृतं॰ येस्वाहा ६ ॐ तस्माद्यज्ञात्सर्वहुतऋचः॰ तस्वाहा ७ ॐ तस्मादश्वा॰
यःस्वाहा ८ ॐ तंयज्ञं॰ येस्वाहा ९ ॐ यत्पुरुषं॰ च्येतेस्वाहा १० ॐ ब्राह्मणोस्य॰
यतस्वाहा ११ ॐ चंद्रमा॰ तस्वाहा १२ ॐ नाभ्याआसीदं॰ यन्स्वाहा १३ ॐ
यत्पुरुषेण॰ द्धविःस्वाहा १४ ॐसप्तास्यासन्॰ पशुंस्वाहा १५ ॐ यज्ञेनयज्ञ॰देवाः
स्वाहा १६ ततोऽवदानधर्मेणचतुर्गृहीतेनचर्वाहुतीर्जुहुयात्। तद्यथा स्रुच्युपस्तीर्यम
ध्यात्पूर्वार्धाच्चचरुमवदायाभिघायजुहुयात्। तत्रमंत्राः ॐ इदंविष्णु॰ रेस्वाहा १
इदंविष्णवे॰ इतित्यागःसर्वत्र ॐअपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानां
याभिर्मित्रावरुणावभ्यषिंचन्याभिरिंद्रमनयन्नत्यरातीःस्वाहा २।२। ॐ प्रपर्वतस्यवृ

य०ना० षभस्यपृष्ठान्नावश्चरंतिस्वसिचऽइयानाः ताऽआववृत्रन्नधराग्गुदक्काअहिर्बुध्न्यमनुरीय बलिः
॥१७॥ माणाः विष्णोर्विक्रमणमसिविष्णोर्विक्रांतमसिविष्णोःक्रांतमसिस्वाहा ३ विष्णोर्नु
कंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि योऽअस्कभायदुत्तरꣳ सधस्थंविचक्र
माणस्त्रेधोरुगायोविष्णवेत्वास्वाहा ४ ॐ दिवोवाविष्णउतवापृथिव्यामहोवाविष्णउ
रोरंतरिक्षात् उभाहिहस्तावसुनापृणस्वप्रयच्छदक्षिणोदोतसव्याद्विष्णवेत्वास्वाहा
५ ॐ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः यस्योरुषुत्रिषुविक्रमणेष्व
धिक्षियंतिभुवनानिविश्वास्वाहा ६ ॐविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यू
रसिविष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्वास्वाहा ७ ॐ तद्विप्रासोविपन्यवोजागृवाꣳ
सःसमिंधते। विष्णोर्यत्परमंपदꣳ स्वाहा८ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे। ॥१७॥
इंद्रस्ययुज्यःसखास्वाहा ९ ॐतद्विष्णोःपरमंपदꣳ सदापश्यंतिसूरयः॥दिवीवचक्षु

राततः स्वाहा १० ॐ अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः। समवर्त्तताग्रेतस्य
त्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रेस्वाहा ११ ॐ वेदाहमेतंपुरुषमहां
तमादित्यवर्णंतमसः परस्तात् । तमेवविदित्वातिमृत्युमेतिनान्यः पंथाविद्यतेयनाय
स्वाहा १२ ॐ प्रजापतिश्चरतिगर्भेऽअंतरजायमानोबहुधाव्विजायते तस्ययोनिंप
रिपश्यंतिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वास्वाहा १३ ॐ यो देवेभ्यआतपतियो
देवानांपुरोहितः।पूर्वोयोदेवेभ्योजातोनमोरुचायब्राह्मयेस्वाहा १४ ॐरुचंब्राह्मंजन
यंतोदेवाअग्रेतदब्रुवन् यस्त्वैवंब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशेस्वाहा १५ ॐ श्री
श्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं। इष्णन्निषाणामुंमइ
षाणसर्वंलोकंमइषाणस्वाहा १६ इतिषोडशचर्वाहुतयः॥ ततोघृताक्ततिलयवशर्करा
मिश्रितैर्जुहुयात्।तद्विप्रासोथमंत्रेणयावदष्टोत्तरंशतं ततःस्विष्टकृतंदद्याच्चरुशेषेणमं

त्रवित् । तद्यथा ॐतद्विप्रासो०इदंविष्णवेइतित्यागः ततोब्रह्मणान्वारब्धकर्तृकोहोम
स्तत्रतत्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषद्रव्यस्यप्रोक्षणीपात्रेप्रक्षेपः होमांतेस्थापि
तदेवतानांपूजनं ॐअद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तनारायणबलि
कर्मणिब्रह्मादिस्थापितदेवतानांपुनःपूजनमहंकरिष्ये ब्रह्मादिचतुष्टयेदेवताभ्यःस
त्येशसहिताभ्यएषवोगंधः एवंपुष्पादीनिसमर्प्यततोपसव्येनामुकगोत्रामुकप्रेतएष
तेगंधउपतिष्ठतु एवंपंचोपचारान्कृत्वापुनःपूजनंसंपूर्णमस्तुतत्रैवाज्यस्थालीपाका
भ्यांस्विष्टकृत् स्रुच्युपस्तीर्य चरोरुत्तरार्द्धान्मेक्षणेनसकृदवदाय द्विरभिघार्यॐअग्न
येस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते०ततआज्येनॐभूःस्वाहाइदमग्नये०१ॐभूवः
स्वाहाइदंवायवे०२ ॐ स्वःस्वाहाइदꣳसूर्याय०३ ॐ त्वन्नोअग्नेव्वरुणस्यविद्वान्दे
वस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा सिप्रमुमुग्ध्यस्म

त्स्वाहा इदमग्नीवरुणाभ्यां० ४ ॐ सत्वन्नोऽअग्नेव्वमोभवोतीनेदिष्ठोऽअस्याऽउष
सोव्युष्टौअवयक्ष्वनोव्वरुणꣳरराणोव्वीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ इदमग्नीवरु
णाभ्यां० ५ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाऽअसि अयानोयज्ञंवहा
स्ययान्नोधेहिभेषजꣳस्वाहा इदमग्नयेअयसे०६ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशा
व्विततामहांतः तेभिर्न्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणा
यसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्च० ७ ॐ उदुत्तमंवरुणपाशम
स्मदवाधमंविमध्यमꣳश्रथाय । अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्याम
स्वाहा ८ इदंवरुणाय० इतिसर्वप्रायश्चित्तम् ॐप्रजापतयेस्वाहा इदंप्रजापतये० इति
मनसाप्राजापत्यं९ इतिनवाहुतीर्हुत्वा अथपूर्णाहुतिः द्वादशगृहीतेनाज्येनस्रुचंपूरयि
त्वा तदुपरिगंधकुंकुमाक्षततांबूलकुसुमयुतंनालिकेरफलंनिधायोत्थाप्य स्रुचंहस्तेगृ

य०ना० हीत्वा ॐमूर्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निं कविंसंम्राजमातिथिं बलिः
॥१९॥ जनानामासन्नापात्रंजनयंतदेवाः१ ॐस्वाहाप्राणेभ्यः साधिपतिकेभ्यः पृथिव्यैस्वाहा
ग्नयेस्वाहांतरिक्षायस्वाहावायवेस्वाहादिवेस्वाहासूर्यायस्वाहा दिग्भ्यःस्वाहा चंद्राय
स्वाहानक्षत्रेभ्यःस्वाहाऽद्भ्यःस्वाहावरुणायस्वाहानाभ्यैस्वाहापूतायस्वाहा वाचे
स्वाहाप्राणायस्वाहा प्राणायस्वाहाचक्षुषेस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहाश्रोत्राय
स्वाहा इतिपूर्णाहुतिः इदंवैश्वानरायाग्नये०॥अथसंस्रवप्राशनं तत्रआचम्य ॐ अद्य
कृतैतन्नारायणबलिहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्र
जापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेवादक्षिणांतुभ्यमहंसंप्रददे इ
तिदक्षिणांदद्यात्ॐस्वस्तीतिप्रतिवचनम्।ततःप्रणीताविमोकः ॐसुमित्रियानऽआप ॥१९॥
ओषधयःसंतु इतिपवित्राभ्यांप्रणीताजलमानीयतेनाशिरःसंमृज्य ॐ दुर्मित्रिया

स्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मइत्यैशान्यांप्रणीतान्युब्जीकरणं ॐ देवागातु
विदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञंस्वाहाव्वातेधाः स्वाहा इतिमंत्रेणब
र्हिर्होमः।मेक्षणमपिअग्नौक्षिपेत्। पवित्रेग्नौक्षिपेदितिहरिहरभाष्ये मणीरामदीक्षितकृ
तानूपविलासेच रामदत्तमिश्रस्यनाभिमतं ततःस्रुवेणभस्मानीयदक्षिणानामिकागृ
हीतभस्मना ॐत्र्यायुषंजमदग्नेरितिललाटे ॐ कश्यपस्यत्र्यायुषं इतिग्रीवायां ॐ
यद्देवेषुत्र्यायुषंइतिदक्षिणबाहुमूले ॐतन्नोअस्तुत्र्यायुषंइतिहृदि त्र्यायुषंकुर्यात् ॐअ
द्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिहवनकर्मणःप्रतिष्ठा
र्थंयथासंपन्नेनान्नेनतृप्तिपर्यंतेनयथासंख्याकान्ब्राह्मणान्भोजयिष्ये तेनश्रीविष्णुः
प्रीयताम्।नारायणबलिहवनकर्मणिन्यूनातिरिक्तंविष्णुप्रसादात्सर्वंपरिपूर्णमस्तु आ
चम्यप्राणानायम्य ॐ तत्सदित्याद्युच्चार्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमि

 त्तकनारायणबलिपूर्वांगभूतं परलोकेमहातृषानिवारणार्थंवैष्णवैःसूक्तैराद्यंतयोः पुरा 
 णश्लोकत्रयावृत्त्याविष्णुतर्पणमहंकरिष्ये जलतिलदुग्धयवसर्वौषधीतुलसीदलमिश्रो
दकेनशंखेनतर्पणंकुर्यात् सव्येनैव ॐअनादिनिधनोदेवःशंखचक्रगदाधरः। अव्ययः
पुंडरीकाक्षःप्रेतमोक्षप्रदोभव १ अतसीपुष्पसंकाशंपीतवाससमच्युतं। येनमस्यंति
गोविंदंनतेषांविद्यतेभयं २ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव। संसारार्णवमग्ना
नां प्रसीदपुरुषोत्तम ३ नारायणसुरश्रेष्ठलक्ष्मीकांतजनार्दन। अनेनतर्पणेनाथप्रेतमोक्ष
प्रदोभव ४ ॐ सहस्रशीर्षा० गुलं १ पुरुषएवेद २० हति २ एतावानस्य० दिवि ३
त्रिपादूर्ध्वं० अभि ४ ततोविराडजायत० पुरः ५ तस्माद्यज्ञात्सर्वहुतःसंभृत०
श्चये ६ तस्माद्यज्ञात्सर्वहुतऽऋचः ० यत ७ तस्मादश्वाअ० वयः ८ तंयज्ञं० 
श्चये ९ यत्पुरुषं० उच्यते १० ब्राह्मणोऽस्य० यत ११ चंद्रमा० यत १२

नाभ्याआसीदं० यन्न १३ यत्पुरुषेण० द्धविः १४ सप्तास्यासन्प० पशुं १५ यज्ञेनयज्ञ० देवाः १६ अनादिनिधनोदेव० श्लो०४ ॐ अद्भ्यः संभृतः०मग्रे १ वेदाह मेतं० नाय २ प्रजापतिश्चरति० विश्वा ३ योदेवेभ्यऽआ० ह्मये ४ रुचंब्राह्मंजनयतो० न्वशे ५ श्रीश्चतेलक्ष्मीश्च० षाण ६ अनादिश्लो०४।४।५। १। ४ ॐ युंजतेमनउतयुं जतेधियोव्विप्राव्विप्रस्यबृहतोव्विपश्चितः व्विहोत्रादधेवयुनाव्विदेकऽइन्महीदेवस्य सवितुःपरिष्टुतिःस्वाहा १ इदंविष्णुर्वि० सुरेस्वाहा २ इरावतीधेनुमतीहिभूतं सू यवसिनीमनवेदशस्य। व्यस्कभ्नारोदसीव्विष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वा हा ३ देवश्रुतौदेवेष्वाघोषतम्प्राचीप्रेतमध्वरंकल्पयंतीऊर्द्ध्वंयज्ञंनयतं माजिह्वरतं स्वङ्गोष्ठमावदतंदेवीदुर्य्येऽआयुर्मानिर्वादिष्टंप्रजांमानिर्वादिष्टमत्ररमेथांव्वर्ष्मन्पृथि व्याः ०४ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि। योऽअस्कभायदु

त्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोव्विष्णवेत्वा० ५ दिवोवाविष्णऽउतवापृथिव्या
महोवाव्विष्णऽउरोरंतरिक्षात् उभाहिहस्ताव्वसुनापृणस्वाप्रयच्छदक्षिणाःदोतसव्या
द्विष्णवेत्वा०६प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः यस्योरुषुत्रिषुव्वि
क्रमणेष्वधिक्षियंतिभुवनानिव्विश्वा० ७ विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्थोविष्णोः
स्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा० ८अनादिनिधनःश्लो० ॥४॥११॥५॥
ॐयुजेवांब्रह्मपूर्व्यन्नमोभिर्व्विश्लोकऽएतुपथ्येवसूरेः। शृण्वतुव्विश्वेऽअमृतस्यपुत्राऽ
आयेधामानिदिव्यानितस्थुः०१यस्यप्रयाणमन्वन्यऽइद्ययुर्देवादेवस्यमहिमानमोज
सा।यःपार्थिवानिविममेसऽएतशोरजाꣳसिदेवःसवितामहित्वना० २देवसवितःप्रसुव
यज्ञम्प्रसुवयज्ञपतिम्भगाय दिव्योगंधर्वःकेतपूःकेतन्नःपुनातुव्वाचस्पतिर्वाचन्नःस्वद
तु० ३ इमंनोदेवसवितर्यज्ञम्प्रणयदेवाव्यꣳसखिविदꣳसत्राजितन्धनजितꣳस्वर्जि

तम्। ऋचास्तोमꣳसमर्द्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्तानिस्वाहा ४ देवस्यत्वासवि
तुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् आददेगायत्रेणछन्दसाङ्गिरस्वत्पृथिव्याः
सधस्थादग्निम्पुरीष्यमाङ्गिरस्वदाभरत्रैष्टुभेनछंदसांगिरस्वत्० ५ अभ्रिरसिनार्य
सित्वयाव्वयमग्निꣳशकेमखनितुꣳसधस्थ।आजागतेनच्छंदसाङ्गिरस्वत ६ हस्त
आधायसवितातिबिभ्रदभ्रिꣳहिरण्मयीम्। अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभर
दानुष्टुभेनच्छंदसांगिरस्वत्०७६४ ॐविष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे।इंद्र
स्ययुज्यःसखा० १ तद्विष्णोःपरमंपदꣳसदापश्यंतिसूरयः। दिवीवचक्षुराततं० २
अनादिनिधनः श्लो० ४६२३ रक्षोहणंव्वलगहनंवैष्णवीमिदमहन्तंव्वलगमुत्किरा
मियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तं वलगमुत्किरामियम्मेसमानोयमस
मानोनिखानेदमहंतंवलगमुत्किरामि यम्मेसबंधुर्यमसबंधुर्निचखानेदंमहन्तंव्वल

 गमुत्किरामि यम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि १ स्वराडसिसपत्न 
 हासत्रराडस्यभिमातिहाजनराडसि रक्षोहासर्वराडस्यमित्रहा २। २। २५ दिविवि
ष्णुर्व्यक्र ꣳ स्तजागतेनछंदसा ततोनिर्भक्तोयोऽस्मान्द्वेष्टियञ्चव्वयंद्विष्मोन्तरिक्षेवि
ष्णुर्व्यक्रꣳस्तत्रैष्टुभेनच्छन्दसा ततोनिर्भक्तोयोस्मान्द्वेष्टियंचवयन्द्विष्मः पृथिव्यां
विष्णुर्व्यक्र ꣳ स्तगायत्रेणछंदसा ततोनिर्भक्तोयोऽस्मान्द्वेष्टियञ्चव्वयंद्विष्मोऽस्मा
दन्नादस्यैप्रतिष्ठाया अगन्मस्वः संज्योतिषाभूम १। १७। ४६ ॐ प्रेताजयतानर
इंद्रोवः शर्मयच्छतु। उग्रावः संतुबाहवोनाधृष्यायथासथ १। २४। १ ॐ अश्वस्तू
परोगोमृगस्तेप्राजापत्याः कृष्णग्रीव आग्नेयोररराटेपुरस्तात्सारस्वतीमेष्यधस्ता
द्धन्वोराश्विनावधोरामौ बाह्वोःसौमापौष्णःश्यामोनाभ्या ꣳ सौर्य्ययामौ श्वेतश्चकृ 
ष्णश्चपार्श्वयोस्त्वाष्ट्रो लोमशसक्थौसक्थ्योर्वायव्यःश्वेतःपुच्छइंद्रायस्वपस्यायस्वे

हद्वैष्णवोवामनः १ । १२ । २ ॐ विष्णोःक्रमोसिसपत्नहागायत्रंछन्द आरो
हप्टाथिवीमनुव्विक्रमस्वव्विष्णोः क्रमोस्यभिमातिहात्रैष्टुभन्छंदआरोहांतरिक्षमनुवि
क्रमस्वव्विष्णोः क्रमोस्यरातीयतोहन्ताजागतन्छन्दआरोहदिवमनुव्विक्रमस्ववि
ष्णोः क्रमोसिशत्रूयतोहन्तानुष्टुभछन्द आरोहदिशोनुव्विक्रमस्व १ । १४ ॐ
साव्विश्वायुःसाव्विश्वकर्मासाव्विश्वधायाःइंद्रस्यत्वाभाग २ सोमेनातनच्मिव्विष्णो
हव्यं२ रक्ष १ । १९ ॐ अद्भुतमसिहविर्धानंदृ २ हस्वमाह्वामातियज्ञ
पतिर्ह्वार्षीत् । विष्णुस्त्वाक्रमतागुरुव्वातायापहत २ रक्षोयच्छन्तापंच १ । १६ । ५१
ॐ मीढुष्टमशिवतमशिवोनःसुमनाभव । परमेवृक्ष ऽआयुधंनिधायकृत्तिंव्वसान
ऽआचरापिनाकंबिभ्रदागहि १ । ३४ । ३४ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदा
भ्यः।अतोधर्माणिधारयन् १ ॐ तद्विप्रासोविपन्यवोजागृवा २ सःसमिंधते । विष्णो

यत्परमंपदं २।७।३४ ॐ विश्वेदेवासऽआगतशृणुतामइम ँ हवं। एदंबर्हिर्निषी
दत १।८।१ ॐ उपयामगृहीतोस्यादित्येभ्यस्त्वाविष्ण उरुगायैषतेसोमस्तं
रक्षस्वमात्वादभन् १।५।३८ ॐ उरुविष्णुर्विक्रमस्वोरुक्षयायनस्कृधि। घृतंघृ
तयोनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा १।१ अनादिनिधनोदेवश्लो० ४ एतत्कृतंयद्वि
ष्णुतर्पणंतेनश्रीमहाविष्णुःप्रीतोऽस्तुअपसव्यं। ॐ अद्यामुकगोत्रामुकप्रेतपरलो
केमहातृषानिवृत्त्यर्थंइदमुदकमुपतिष्ठतु। इतिताम्रपात्रगृहीतसर्वौषधीयवतिलतुल
सीदलयुतजलेनसव्यहस्तगृहीतनदक्षिणहस्तस्थशंखेनउभाभ्यांहस्ताभ्यांजलधारां
दद्यात्। एवंत्रिवारं। ॐ अद्येतिपूर्ववत्। ततःसव्यंकृत्वाआचम्य ॐ अद्यामुक
गोत्रस्यामुकप्रेतस्यपरलोकेमहाक्षुधानिवारणार्थंविष्णुतर्पणकर्मणः सांगतासिद्ध्य
र्थं श्रीमहाविष्णुप्रीत्यर्थं यथासंपन्नेनान्नेनतृप्तिपर्यंतेनयथासंख्याकान्ब्राह्मणानेकं

वाभोजयिष्ये तेनश्रीविष्णुःप्रीयताम् । विष्णुतर्पणकर्मणिन्यूनातिरिक्तंसर्वंपरिपूर्ण मस्तु।इतिविष्णुतर्पणम् ॥ अथैकादशश्राद्धप्रयोगः ॥ कृतनित्यक्रियः आचांतउप विष्टः पूर्वोपकल्पितंप्रज्वालितप्रदीपंस्थापितगौरसर्षपतिलादिरक्षोघ्नंशश्राद्धदेशमा गत्य ॐ सिद्धमितिपाचिकांपृष्ट्वाकुशत्रयजलेन ॐ अपवित्रःपवित्रोवेतिपठित्वा ॐ पुंडरीकाक्षःपुनात्वित्युच्चार्य श्राद्धीयवस्तून्यात्मानंचाभिसिंचेत् ॐ अद्यामुक गोत्रस्यपितुरमुकप्रेतस्यप्रेतत्वविमुक्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौवि हितविष्णवादिविष्णुपर्यंतानामेकादशश्राद्धानिपिंडदानविधिनाकरिष्ये । ततस्त्रिर्गा यत्रींजपित्वा ॐ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः ॥ इतित्रिर्जपेत् । ततःपिंडस्थानंनिर्मायचतुरस्राः प्रादेशमात्रा एकादशवेदिकाःकुर्यात् तन्मध्येवामहस्तेदक्षिणहस्तगृहीतदर्भपिंजूलीमूलेनप्रादेश

मात्रमपहतेत्यादिनोल्लिख्यदर्भपिंजूलीमुत्तरतस्त्यजेत् एवंनवरेखाः अपसव्येनदश मरेखांकृत्वा पुनःसव्येनएकादशींरेखांकुर्यात् । ततःरेखोपरि ॐ येरूपाणिप्रतिमुं चमानाअसुराःसंतःस्वधयाचरंति । परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकान्प्रणुदात्त्य स्मात् ॥ इतिमंत्रेणांगारंभ्रामयित्वाअंगारंदक्षिणतस्त्यजेत् । ततोरेखोपरिकुशत्रयंद क्षिणाग्रंप्रत्येकमास्तीर्य ॐ देवताभ्यइतित्रिर्जपेत् । ततोएकादशपुटकेजलयवगंध पुष्पाणिकृत्वा तत्रदशमपुटकेयवस्थानेतिलप्रक्षेपः । दक्षिणहस्तेनयवकुशत्रयजला न्यादायवामहस्तेपुटकमेकंचगृहीत्वा ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मर णनिमित्तकनारायणबलिविहितैकादशश्राद्धेविष्णोऽत्रावनेनिक्ष्वतेनमः १ इतिपुट कस्थजलादर्धजलंप्रथमवेदिकाकुशोपरिअवनेजनंदत्वा एवंद्वितीयावेदिकायांचतत्र शिवअत्राऽवनेनिक्ष्वतेनमः २ यमसपरिवार ३ सोमराज ४ हव्यवाहन ५ सोमपि

तृमन् ६ रुद्ररूप ७ मृत्यो ८ पुरुष ९। अपसव्यम्। अद्यामुकगोत्रामुकप्रेतनारायणब
लिविहितैकादशश्राद्धपिंडस्थानेअत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतां इतिदश
मवेदिकायामवनेजनंकुशोपरिदत्त्वा पुनःसव्येन ॐ अद्यविष्णोअत्रावनेनिक्ष्वते
नमः एवमेकादशस्थानेष्ववनेजनंदत्त्वा ततस्तिलघृतमधुयुतेनान्नेनपिंडान्कृत्वा
घृतमधुभ्यामभिघार्य एकंपिंडंवामहस्तेकृत्वादक्षिणहस्तेनकुशयवजलान्यादाय
ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यनारायणबलिविहितैकादशश्राद्धेविष्णोएषतेपिंडो
नमइतिवामान्वारब्धदक्षिणहस्तेनावनेजनस्थानेपिंडंदद्यात्। एवंशिव २ यमसप
रिवार ३ सोमराज ४ हव्यवाहन ५ सोमपितृमन् ६ रुद्ररूप ७ मृत्यो ८ पुरुष ९।
अपसव्यम्। ॐअद्यामुकगोत्रामुकप्रेतनारायणबलिविहितैकादशश्राद्धेएषपिंडस्ते
मयादीयतेतवोपतिष्ठतां। इतिदशमंपिंडंदत्वा ततःसव्येनविष्णो॰ नमः ११ एवंसर्वे

५

षां पिंडान्दत्वा ततोदर्भमूलेकरंप्रोक्ष्यआचम्यहरिंस्मृत्वा ततोऽवनेजनपात्रंदत्ताव
शिष्टजलयुतंवामहस्तेकृत्वादक्षिणहस्तेन कुशत्रययवजलान्यादाय ॐ अद्यामुक
गोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिविहितैकादशश्राद्धेविष्णोप्र
त्येवनेनिक्ष्वतेनमः एवंद्वितीयादिवेदिकायांचतत्रशिवप्रत्यवनेनिक्ष्वतेनमः २ यमस
परिवार ३ सोमराज ४ हव्यवाहन ५ सोमपितृमन् ६ रुद्ररूप ७ मृत्यो ८ पुरुष ९
अपसव्यम् । ॐअद्यामुकगोत्रामुकप्रेतनारायणबलिविहितैकादशश्राद्धपिंडे प्रत्य
वनेनिक्ष्वते मयादीयतेतवोपतिष्ठताम् । इतिदशमपिंडोपरिप्रत्यवनेजनंद्यात् । पुनः
सव्येनअद्या० श्राद्धविष्णोप्रत्यवनेनिक्ष्वतेनमः एवंप्रत्यनेजनंदद्यात् । ततोनीवींवि
स्त्रस्याचम्य वामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय उभाभ्यां पिंडोपरि ॐएतत्तेविष्णो
वासइतिसूत्रंधृत्वा । एवंशिवादीनामपि दशममपसव्येन एतत्तेपितवासः इतिसूत्रं

धृत्वा पुनरेकादशेसव्येनएतत्तेविष्णोवासःकुशादीन्यादाय। ॐ अद्यामुकगोत्रस्य
अमुकप्रेतस्यनारायणबलिविहितैकादशश्राद्धपिंडेविष्णोएतद्वासस्तेनमः । एवं
शिव २ यमसपरिवार ३ सोमराज ४ हव्यवाहन ५ सोमपितृमन् ६ रुद्ररूप ७
मृत्यो ८ पुरुष ९ । अपसव्यम् । १ अद्यामुकगोत्रामुकप्रेतनारायणब
लिविहितैकादश्राद्धपिंडे एतद्वासस्तेमयादीयतेतवोपतिष्ठतामितिसूत्रमुत्सृजेत्।
ततःसव्येनैकादशेविष्णुपिंडेच पूर्ववत्सूत्रमुत्सृजेत् । ततस्तूष्णीं गंधपुष्पधूपदीप
तांबूलपूगीफलानिदद्यात् । ततःपिंडशेषान्नंपिंडसमीपेविकीर्य ततःएभिःपिंडदानैः
अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिरस्तु उत्तमलोकावाप्तिरस्तु। ततोंजलिदा
नम् ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यपरलोके महातृषानिवारणार्थं अमुकदुर्मरण
मित्तकनारायणबलिविहितैकादशश्राद्धेपिंडोपरि एकैकमंत्रेणद्विर्द्विरंजलिदानम

य०ना० हंकरिष्ये ॐ आपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीरायस्वश्चितानाः । याभिर्मित्रावरु बलिः
॥२६॥ णावभ्यषिंचन्याभिरिंद्रमनयन्नत्यरातीः । अद्यामुकगोत्रस्यामुकप्रेतस्यनारायणब
लिविहितैकादशश्राद्धान्तर्गतप्रथमेविष्णुपिंडेजलधारातेनमः । इतिद्वावंजलीदद्यात्
७।७।४ ॐउपयामगृहीतोस्यंतर्यच्छमघवन्पाहिसोमं उरुष्यरायएषोयजस्व अद्या०
प्रेतस्यनारायणबलौ विहितैकादशद्धांतर्गतद्वितीयेशिवपिंडेजल० ते नमःद्वावंजली
दद्यात् २।३३।३२ ॐ येनापावकचक्षसाभुरण्यंतंजनाँऽअनु । त्वंवरुणपश्यसि अद्या०
प्रेतस्यनारायणबलौविहितैका० श्राद्धांतर्गततृतीयेसपरिवारयमपिंडेजल० नमः ।
द्विवारं ३।७।१९ ॐ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सु
क्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमञ्जुषध्वं । अद्यामुकगोत्र० प्रे० ना० बलौ० ॥२६॥
एका० श्राद्धांतर्गतचतुर्थेसोमराज० जल० नमः ४ । ६ । २१ ॐ समुद्रंग

च्छस्वाहांतरिक्षंगच्छस्वाहादेव २ सवितारंगच्छस्वाहामित्रावरुणौगच्छस्वाहा
होरात्रेगच्छस्वाहाछन्दा २ सिगच्छस्वाहाद्यावापृथिवीगच्छस्वाहायज्ञंगच्छ
स्वाहासोमंगच्छस्वाहादिव्यंनभोगच्छस्वाहाऽग्निंवैश्वानरंगच्छस्वाहामनोमेहार्दि
यच्छादिवंतेधूमोगच्छतुस्वर्ज्योतिः पृथिवींभस्मनापृणस्वाहा अद्यामुकगोत्रस्यामु
कप्रेतस्यनारायणवलौविहितैकादशश्राद्धांतर्गतपंचमेहव्यवाहनपिंडेजलधा राते
नमः ५ । ३ । ८ ॐ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्योज्योतिर्ज्योतिः
सूर्यःस्वाहा अग्निर्वर्च्चोज्योतिर्वर्चःस्वाहा सूर्योवर्चोज्योतिर्वर्चःस्वाहा ज्योतिः
सूर्यःसूर्योज्योतिःस्वाहा । अद्या० प्रेतस्य० ना० बलौएकादशश्राद्धांतर्गतषष्ठेसोम
पितृमत्पिण्डेजलधारातेनमः ६ ।१३। ४॥ ॐहिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः
पतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम।अद्या० प्रेत

यं॰ना॰ स्यना॰बलौएकादशश्राद्धांतर्गतसप्तमेरुद्ररूपपिंडेजलधारातेनमः ७।१।१।ॐइषेत्वो बलिः
॥२७॥ र्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्न्याइन्द्रायभा
गंप्रजावतीरनमीवाअयक्ष्मा मावस्तेनईशतमाघशꣳसोध्रुवाअस्मिन्गोपतौस्यातब
ह्वीर्यजमानस्यपशून्पाहि अद्या॰प्रेतस्यना॰बलौविहितैका॰श्राद्धांगर्ताऽष्टमेमृत्युपिं
डेजलधारातेनमः ८३।४।१। ॐयज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैतिदूरंगमंज्यो
तिषांज्योतिरेकंतन्मे मनःशिवसंकल्पमस्तु अद्या॰प्रेतस्यना॰ बलौविहितैका॰ श्रा
द्धांतर्गतनवमेपुरुषपिंडेजलधारातेनमः ९।१२।८८ ॐयाःफलिनीर्याअफलाअपुष्पा
याश्चपुष्पिणीः॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वꣳहसः अपसव्यं अद्या॰प्रेतना॰बलौ
विहितैका॰ श्राद्धांतर्गतदशमेप्रेतापिंडेजलधारातेमयादी॰ तांद्विवारं सव्यं ॐ ॥२७॥
विश्वतश्चक्षुरुताविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् । संबाहुभ्यांधमतिसंपतत्रै

द्यांवाभूमीजनयन्देवएकः ॥ अद्या॰प्रेतस्यना॰बलौविहितैका॰ श्राद्धांतर्गतएका
दशेविष्णुपिंडेजलधारातेनमः ११ ततोपसव्यं ॐ अद्यामुकगोत्रामुकप्रेतपरलोके
महातृषानिवारणार्थं अमुकदुर्मरणनिमित्तकनारायणबलौविहितविष्णवादिविष्णु
पर्यंतमेकादशपिंडोपरिइदमुदकमुपतिष्ठतु एवंत्रिवारंदक्षिणहस्तशंखेनवामेताम्रपा
त्रेणपिंडोपरित्रिवारंजलधारांदद्यात् सव्य ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्व
विमुक्त्यर्थंपरलोकेमहाक्षुधानिवृत्त्यर्थं अमुकदुर्मरणानिमित्तकनारायणबलौविहितै
कादशश्राद्धकर्मणः समृद्ध्यर्थंइमान्येकादशआमान्नानिगन्धपुष्पाद्यर्चितानिसदक्षि
णाकानिविष्णुशिवसपरिवारयमसोमराजहव्यवाहनसोमपितृमद्रुद्ररूपमृत्युपुरुष
प्रेतविष्णूनां तृप्त्यर्थं यथानामगोत्रेभ्यो ब्राह्मणेभ्योदातुमहमुत्सृजे ततोपसव्येनदश
मंसर्वान्पिडान्सव्येनैवाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकंचवन्हौक्षिपेत् अद्य॰

गोत्रस्य० प्रेतस्य दुमरण०नारायणबलिविहितैकादशश्राद्धसांगतासिद्ध्यर्थंइमानि
हिरण्याद्येकादशदानानितत्तद्देवतातृप्तयेवा० गोत्रेभ्योब्राह्मणेभ्यो० हिरण्यंवस्त्रंर
जतंगुडाज्येलवणंतथा।लोहदंडंतिलान्धान्यंमहिषींचामरंददे ततःॐ देवताभ्यइति
त्रिर्जपेत् ततःपाणिनादीपंनिर्वाप्यहस्तपादप्रक्षालनमाचमनंचकुर्यात् ॐ प्रमादादि
तिपठित्वाविष्णुंस्मरेत् श्राद्धीयवस्तुजलेक्षिपेतइत्येकादशश्राद्धविधिः ततःपुरुषाहा
रपरिमितमन्नंविष्णवेब्रह्मणेशिवायसकिंकरायययमायबलिंदद्यात् तत्रमंत्राःब्रह्मविष्णु
महादेवायमश्चैवसकिंकरः बलिंगृहीत्वाकुर्वंतुप्रेतस्यचशुभांगतिं इतीमंबलिं समर्पया
मीत्युक्त्वाप्रतिदैवतंत्रिविधंफलंसमर्प्यपात्रांतरेशर्करामधुगुडसर्पींषिनिवेदयेत् दा
लभ्यमतेनबलिदानानि अथपंचश्राद्धं तत्रादौसूक्तजपः अथपंचश्राद्धविधिः ॐ तत्स
दद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्यअमुकदुर्मरणनिमित्तकनारायणबलिकर्मणि

अमुकगोत्रममुकशर्माणंब्राह्मणमेभिश्चंदनपुष्पाद्यलंकरणवासोभिर्ब्रह्मविष्णुरुद्रय
माग्नेयसूक्तजपार्थंत्वामहंवृणे तत्रपूर्वदिनेऽधिवासनंकृतंचेत्तद्दिनेएकभुक्तादिकंविधा
य प्रातःश्वेतवस्त्रयुगेनस्नात्वामध्यंदिनेपुनःस्नात्वा कृतनित्यक्रियआचांतउपविष्टः
पूर्वोपकल्पितंप्रज्वालितंप्रदीपंस्थापितगौरसर्षपतिलादिरक्षोघ्नंश्राद्धदेशमागत्य ॐ
सिद्धमितिपृष्ट्वाकुशत्रयजलेन ॐ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा।यःस्मरेत्पुं
डरीकाक्षंसबाह्याभ्यंतरं शुचिः इतिपठित्वा ॐ पुंडरीकाक्षःपुनात्वितिउच्चार्य श्राद्धदे
यद्रव्याण्यात्मानंचाभिसिंचेत्। ततःकुशत्रयतिलजलैःसंकल्पंकुर्यात्। ॐ अद्येत्याद्यु
च्चार्यामुकगोत्रस्यापितुरमुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मर
णनिमित्तकनारायणबलौविहितंश्राद्धपंचकमेकोद्दिष्टविधिनाकरिष्ये इतिसंकल्पये
त्ततस्त्रिर्गायत्रींजपित्वा ॐ देवताभ्य इतित्रिर्जपेत्। ततःकुशत्रययवजलान्यादाय

 ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुक 
 दुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेब्रह्मन्निदमासनंतेनमइत्यासनमुत्सृजे
त्। एवंपुनःकुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेत
त्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्रा
द्धेविष्णोइदमासनंतेनमः इत्यासनमुत्सृजेत् पुनः कुशत्रययवजलान्यदाय ॐ
अद्यामुकगोत्रस्यपितु० प्रे० प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनि
मित्तकना० बलौविहितपं० द्धेरुद्रइदमासनंतेनमः पुनःकुशत्रययवजलान्यादाय
ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुक
दुर्मरणनिमित्तिकनारायणबलौविहितपंचश्राद्धेयमइदमासनंतेनमः ततोपसव्यम्। 
मोटकातिलजलान्यादाय ॐ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावा

त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेइदमासनंतेमयादीयतेत
वोपतिष्ठतामितिमोटकरूपासनंतिलजलप्रोक्षितंदक्षिणाग्रमुत्सृजेत् ॐ अपहता
असुरारक्षांसिवेदिषदः इति वामावर्त्तेनश्राद्धदेशेतिलान्विकीर्य ॐ आयंतुनः
पितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवंतुते
वंत्वस्मान् । इतिमंत्रंपठेत् ॥ ततःपुटकचतुष्टयेसव्येनपंचमेपुटकेपसव्येनपवि
त्राणिदक्षिणाग्राणिधृत्वा ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवउत्पुनाम्यच्छिद्रे
णपवित्रेणसूर्यस्यरश्मिभिः । इतिमंत्रंचपठित्वा एवंसव्यापसव्याभ्यांपात्रचतुष्टये
पंचमपात्रेच ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः । इतिमं
त्रेणतत्रजलंक्षिपेत् । ततः । यवोसियवयास्मद्द्वेषोयवयारातीरितिमंत्रेणपात्रचतुष्टये
यवान्निक्षिप्य ततोपसव्येन ॐ तिलोसिसोमदेवत्योगोसवोदेवनिर्मितः ॥ प्रत्नमद्भिः

य०ना०

॥३०॥

पृक्तः स्वधयापितॄन्लोकान्प्रीणयाहिनः स्वाहेतिपंचमपात्रेतिलान्प्रक्षिप्य ततः क्रमे
णसव्यापसव्याभ्यां तूष्णींगंधंपुष्पंचनिक्षिपेत् ॥ ततः प्रथमार्घपात्रंसव्येनवामहस्ते
कृत्वा पवित्रमन्नपात्रोपरिउत्तराग्रंधृत्वा तदुपरिकिंचिदुदकांतरंदत्त्वाअपरेणाच्छा
द्य । ॐ यादिव्याऽआपःपयसासंबभूवुर्याऽअंतरिक्षाउतपार्थिवीर्याः॥हिरण्यवर्णाय
ज्ञियास्तानऽआपःशिवाःसं२ स्योनाःसुहवाभवंतु इतिपठित्वा दक्षिणहस्तेकुशत्रय
यवजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावा
प्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपञ्चश्राद्धे ब्रह्मन्एषहस्तार्घस्ते
नमः इतिपवित्रोपरिजलंददर्घंदद्यात् । ततः द्वितीयार्घपात्रंवामहस्तेकृत्वा पवित्र
मन्नपात्रोपरिउत्तराग्रंधृत्वा तदुपरिकिंचिदुदकांतरंदत्त्वा । ॐ यादिव्या० वन्तुइति ॥३०॥
पठित्वादक्षिणहस्तेनकुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्याद्य० प्रेत० प्रेत

बलिः

त्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपञ्चश्रा
द्धे विष्णोएषहस्तार्घस्तेनमः इतिपवित्रोपरिजलंददद‍र्घंदद्यात् । ततस्तृतीयार्घ
पात्रंवामहस्तेकृत्वा पवित्रमन्नपात्रोपरिउत्तराग्रंधृत्वा तदुपरिकिंचिदुदकांतरंदत्त्वा
ॐ यादिव्या० वतुइति पठित्वाकुशादीन्यादाय । ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य
प्रेतत्वविमुक्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपञ्चश्राद्धेरुद्रएषहस्ता
र्घस्तेनमः । ततःचतुर्थार्घपात्रंवामहस्तेकृत्वा पवित्रंभोजनपात्रेउत्तराग्रंधृत्वा तदुप
रिकिंचिदुदकांतरंदत्त्वा ॐ यादिव्या० त्रवंतु कुशादीन्यादायॐअद्यामुकगोत्रस्या
मुकप्रेतस्यप्रे०र्थममुकदु०त्तकनारायणबलौविहितपंचश्राद्धेयमएषहस्तार्घस्तेनमः।
ततोपसव्यंकृत्वा पातितवामजानुःपंचमार्घपात्रंवामहस्तेकृत्वातदुपरिपवित्रंभोजन
पात्रेउ०त्वा तदुपरिकिंचिदुदकांतरंदत्वा ॐ यादिव्या० वंतु मोटकतिलजला

न्यादाय ॐ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थं अमुकदुर्मरण० बलौविहित
पंचश्राद्धे एषहस्तार्घस्तेमयादीयते तवोपतिष्ठतामिति पवित्रोपरिजलंददद्र्घंद
द्यात् । ततःसव्येनब्रह्मादिचतुष्टयदेवानांपवित्रादिसहितमर्घ्यपात्राणि आसनद
क्षिणपार्श्वेब्रह्मणेस्थानमसीतिउत्तानमेवधारयेत् । एवंविष्णवेशिवाय यमायतत्तदा
सनदक्षिणपार्श्वेनिदध्यात् । एवमपसव्येन प्रेतासनवामपार्श्वे ॐ पवित्रेस्थानम
सीतिन्युब्जंकुर्यात्ततोगंधादिदानं सव्येनकुशयवजलान्या० ॐ अद्यामुकगोत्र
स्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनाराय
णबलौविहितपंचश्राद्धे ब्रह्मन्नेतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेन
मःएवंविष्णवादीनामपि ततोऽपसव्यंकृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुक
गोत्रामुकप्रेतामुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेएतानिगंधपुष्पधूप

दीपतांबूलयज्ञोपवीतवासांसितेमयादीयंते तवोतिष्ठंतामितिगंधादिकमुत्सृजेत्।ततः
सव्येनआसनस्यभोजनपात्रस्यचतुर्दिशं चतुरस्रंमंडलंजलेनकृत्वाश्राद्धीयान्नाग्रभा
गंघृतव्यंजनतिलजलयुतंपुटकादौ कृत्वाततोपसव्येन ॐ इदमन्नमेतद्भूस्वामिपितृ
भ्योनमइत्युत्सृजेत् सव्येनैवताम्रपात्रेण कराभ्यामादाय मनाक्स्थित्वादेवंध्याय
न्पुरुषतृप्तिक्षममन्नंपरिविष्य भूमिस्थपात्रांतरेषु व्यंजनान्युपकल्प्यपुटकास्थितं घृतं
सातिलजलंचोपनीय अन्नोपरिहस्तद्वयोपगृहीतपात्रेण मधुदद्यात् ततः ॐ मधुव्वा
ताऋतायतेमधुक्षरंतिसिंधवः। माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पा
र्थिवꣳरजः। मधुद्यौरस्तुनःपिता॥मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः। माध्वीर्गावो
भवंतुनः ॐ मधुमधुमध्विवितिचजपेत्। ततउत्तानहस्ताभ्यामन्नपात्रमालभ्य ॐ
पृथिवीतेपात्रंद्योरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वाहा ॐ इदंविष्णुर्वि

चक्रमेत्रेधानिदधेपदं । समूढमस्यपा ं सुरे ॥ ॐ कृष्णहव्यमिदंरक्षमदीयमितिप
ठित्वावामेनपात्रमत्यजन् दक्षिणहस्तांगुष्ठमन्नजलघृतेषुनिवेश्य ॐ इदमन्नं ॐ
इमाआपः ॐ इदमाज्यं ॐ इदंहविरितिनिक्षिप्य ॐ यवोसियवयास्मद्द्वेषोयव
यारातीः इत्यन्नोपरियवान्विकीर्य दक्षिणहस्तेनकुशादीन्यादाय ॐ अद्यामुकगोत्र
स्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनाराय
णबलौविहितपंचश्राद्धे ब्रह्मन् इदमन्नंसोपस्करंतेनमइत्यन्नमुत्सृजेत् । एवंविष्णवा
दीनाम्।ततोपसव्यं ततः पंचमंव्यस्तहस्ताभ्यामन्नपात्रमालभ्य ॐ पृथिवीतेपात्रमि
त्यादिइदंविष्णु० सुरे ॐ कृष्णकव्यमिदंरक्षमदीयमितिपठित्वा वामेनपात्रमत्य
जन्दक्षिणहस्तांगुष्ठमन्नजलघृतान्नेषु ॐ इदमन्नं ॐ इमाआपः ॐ इदमाज्यं ॐ
इदंहविरितिनिक्षिप्य ॐ अपहताअसुरारक्षांसिवेदिषदः । इत्यन्नोपरितिलान्विकी

र्यं दक्षिणेनमोटकादिकमादाय ॐ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तम
लोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेइदमन्नं सोपस्करं
तेमयादीयतेतवोपतिष्ठतामित्यन्नमुत्सृजेत् ततःसव्येन गायत्रींमधुवाताऋचं
जपेत् रक्षोघ्नमंत्रान् कृष्णुष्वपाजइत्यादिकान् भूमौतिलान्निक्षिप्य पित्र्यमंत्रपु
रुषसूक्ताप्रतिरथादीनिपठित्वायथाशक्तिजपेत् । ततः ॐ नमस्तुभ्यंविरूपाक्ष
नमस्तेनेकचक्षुषे ॥ नमःपिनाकहस्तायचक्रहस्तायवैनमः । इतिश्लोकमपिपठेत् ।
तत उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयांभूमिं प्रोक्ष्य सर्वप्रकारकमन्नं
तिलघृतसहितं जलेनाप्लाव्य गृहीत्वा अनग्निदग्धाश्चये जीवायेप्यदग्धाः
कुलेमम॥ भूमौ दत्तेनतृप्यंतुतृप्ता यांतुपरांगतिम् ॥ इतिकुशोपरितदन्नंपंचसुस्था
नेषुविकिरेत् । तत्रपंचमेअपव्येनविकिरेत्।ततः सव्यंकृत्वाऽऽचम्यहरिंस्मृत्वापिण्ड

स्थानंनिर्माय तन्मध्येवामहस्तेदर्भाग्रदक्षिणहस्तगृहीतदर्भपिंजूलीमूलेनप्रादेशमा त्रम् ॐ अपहतेत्यादिनोल्लिख्य चतसृषु सव्येन पंचमेऽपसव्येन दर्भपिंजूली मुत्तरतस्त्यजेत् । ततोरेखोपरि ॐ येरूपाणिप्रतिमुंचमानाअसुराःसंतः स्वध याचरंति॥परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादितिमंत्रेण पंचसुरेखासु अंगारं भ्रामयेत्।तत्ररेखाचतसृषुसव्येनपंचमेऽपसव्येनांगारंदक्षिणतस्त्यजेत् ।ततः रेखोपरिप्रत्येकंउपमूलसकृच्छिन्नकुशान् दक्षिणाग्रानास्तीर्य्य सव्येनैवदेवताभ्य इ तित्रिर्जपेत्।पुटकपंचकेजलयवगंधपुष्पाणिकृत्वापंचमपुटकेयवस्थानेतिलान्कृत्वा प्रथमपुटकंवामहस्तेकृत्वा दक्षिणहस्तेन कुशादीन्यादाय । ॐअद्यामुकगोत्रस्यामु कप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिविहितपंचश्राद्धे ब्रह्मन्पिंडस्थानेऽत्राव नेनिक्ष्वते नमः। एवंविष्णुरुद्रयमेभ्योऽवनेजनंतत्तदास्तृतकुशेषु दद्यात् । ततःपंचम

स्थानेऽपसव्येनवामहस्तेकृत्वादक्षिणहस्तेनमोटकतिलजलान्यादाय ॐ अद्यामुक
गोत्रामुकप्रेत प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारा
यणबलिविहितपंचश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामिति पंच
मस्थानेकुशोपरिअवनेजनं दद्यात्। ततस्तिलघृतमधुयुतपिंडान्कृत्वा घृतमधुभ्या
मभिघार्य सव्येनैववामहस्तेपिंडं दक्षिणहस्तेनयवकुशादीन्यादाय ॐ अद्या
मुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिविहितपंचश्राद्धे ब्रह्मन्ने
षतेपिंडोनमः इतिवामान्वारब्धदक्षिणहस्तेनअवनेजनस्थानेपिंडंदद्यात्। एवं विष्णु
रुद्रयमानां तत्तदवनेजनस्थाने पिंडंदद्यात्।ततोऽपसव्येनमोटकादिसहितंपंचमपिंडं
गृहीत्वा ॐ अद्यामुकगोत्रअमुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्म
रणनिमित्तकनारायणबलिविहितपंचश्राद्धे एषपिंडस्तेमयादीयतेतवोपतिष्ठतामि

 तिकुशोपरि अवनेजनस्थाने पिंडं दद्यात् । आस्तृतदर्भमूले करंप्रोक्ष्य सव्यंकृत्वा 
 ऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा ॐ अत्रपितरोमादयध्वं यथाभागमावृषायी
षत॥इति पठित्वावामावर्तेनोदङ्मुखोभूत्वामनाकुश्वासं नियम्यतेनैवयथासुखंपर्या
वर्त्तयन्पितरंभास्वरमूर्तिंध्यायन्ॐ अमीमदन्तपितायथाभागमावृषायिषेतिपठेत्।
ततःसव्यं कृत्वा अवनेजनावशिष्टजलयुतं पात्रं वामहस्तेकृत्वा दक्षिणहस्तेनयवकु
शादीन्यादाय ॐ अद्याऽमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावा
प्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिविहितपंचश्राद्धपिंडे ब्रह्मन्प्रत्यवनेनिक्ष्व
तेनमः। एवंविष्णुरुद्रयमादीनांप्रत्यवनेजनंपिंडोपरिदद्यात्।ततःपंचमपात्रंअपसव्ये
न वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्य अमुकगोत्रस्य अमु 
कप्रेतस्यप्रेतत्वविमुक्त्यर्थंउत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलि

विहितपंचश्राद्धपिंडेऽत्रावनेनिक्ष्वते मयादीयते तवोपतिष्ठतामिति पिंडोपरि प्रत्यवने
जनंदद्यात्। ततोनीवींविस्रस्यसव्यं कृत्वाचम्यहरिंस्मृत्वावामेनपाणिनाधृतंसूत्रंदक्षि
णहस्तेनगृहीत्वा ॐ एतत्तेब्रह्मन्वासः। इतिपिंडोपरिसूत्रंधृत्वा। एवंविष्णुरुद्रयम
दीनाम्। ततोऽपसव्येन ॐ एतत्तेपितुर्वासः। ततःसव्यंकुर्यात्। दक्षिणहस्तेनकुशत्रय
यवजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोका
वाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिविहितपंचश्राद्धेब्रह्मन्एतद्वासस्ते मया
दीयतेनमः इत्युत्सृजेत्। एवंविष्णुरुद्रयमानाम्। ततोऽपसव्येनमोटकतिलजलान्या
दाय ॐ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मर
णनिमित्तकनारायणबलौविहितपंचश्राद्धपिंडे एतद्वासस्तेमयादीयते तवोपतिष्ठता
मित्युत्सृजेत्। सव्यम्। तूष्णींगंधपुष्पधूपदीपतांबूलानिप्रत्येकंपिंडेदद्यात्। ततःपिंडशे

य०ना० षान्नं तत्तत्पिंडसमीपे विकीर्य। ततोदेवान्पात्रे ॐ शिवा आपःसंत्विति जलम्। ॐ सौम बलिः
नस्यमस्त्विति पुष्पम्। ॐ अक्षतंचारिष्टमस्त्विति तंडुलान् सव्यापसव्याभ्यांक्रमे
॥३९॥ णदद्यात्। कुशद्वययवजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमु
क्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेब्रह्म
णःदत्तैतदन्नपानादिकमक्षय्यमस्तु॥ एवं विष्णवादीनामक्षय्योदकं दद्यात्॥ ततो
पसव्येन मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमु
क्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौविहितपंचश्राद्धेदत्तै
तदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकंदद्यात्। सव्यम्। अघोरःपिताऽस्त्विति द
क्षिणांदिशंपश्यन् पिंडोपरि पूर्वाग्रांजलधारां दद्यात्। ततः पूर्वाभिमुखीभूय ॐ गोत्रं
नोवर्द्धतामितिवदेत्। ॐवर्द्धतामितिप्रतिवचनम्। ॐदातारोनोभिवर्द्धतांवेदाःसंततिरे ॥३९॥

वच। श्रद्धाचनोमाव्यगमद्बहुदेयंचनोभवेत्। अन्नंचनोबहुभवेदतिथींश्चलभेमहि। याचि
तारश्चनः संतुमाचयाचिष्मकंचन॥ एताः सत्याआशिषः संत्विति आशिषोब्राह्मणंयाचे
त्। ॐ संत्विति ब्राह्मणप्रतिवचनम् ततः पिंडोपरिसपवित्रकुशान्धृत्वा पुटकादिस्थितं
जलंगृहीत्वा ॐ ऊर्जंवहंतीरमृतंघृतंपयः कीलालंपरिस्रुतम्। स्वधास्थतर्पयतमेपितरामि
तिप्रत्येकंपिंडोपरिदक्षिणाग्रांजलधारांदद्यात्। ततः पिंडोपरिअंजलिदानंकार्यम्। ॐ
अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनि
मित्तकनारायणबलौविहितपंचश्राद्धे परलोकेमहातृषानिवृत्त्यर्थंद्वाभ्यांद्वाभ्यांमंत्रा
भ्यां पिंडोपरिएकैकांजलिदानमहंकरिष्ये। सव्यम्। ॐ अग्निमीडेपुरोहितंयज्ञस्यदेव
मृत्विजम्। होतारंरत्नधातमम् ॥१॥ ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराज
न्यः शूरइषव्योतिव्याधीमहारथोजायतां दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषा

य०ना० जिष्णुरथेष्ठाः । सभेयोयुवास्ययजमानस्यव्वीरोजायतांनिकामेनिकामेनःपर्जन्योव बलि०

॥३६॥ र्षतुफलवत्योनओषधयःपच्यंतांयोगक्षेमोनःकल्पताम् ॥ २ ॥ तत्सदद्येत्यादि० गोत्र

स्य प्रेतस्य ना० प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनाराय

णबलौविहितपंचश्राद्धेपरलोके महातृषानिवृत्त्यर्थं प्रथमे ब्रह्मपिंडे जलधारा ते नमः

ॐइषेत्वोर्जेत्वाव्वायवस्थदेवोवःसविताप्रार्प्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्न्या

इंद्रायभागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनईशतमाघशꣳसोध्रुवाअस्मिन्गोपतौ

स्यातबह्वीर्यजमानस्यपशून्पाहि।१।१। ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्।समूढ

मस्यपाꣳ सुरे स्वाहा ॥२॥ॐ अग्नऽआयाहिवीतयेगृणानोहव्यदातये । निहोतास

त्सिबर्हिषि ॥३॥ ॐ नमः शंभवायचमयोभवायचनमःशंकरायचमयस्करायचनमः ॥३६॥

शिवायचशिवतरायच ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः

ॐ यमात्वामखायत्वातूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः ॐ प्रेता
जयतानरइन्द्रोवः शर्मयच्छतु उग्रावः संतुबाहवोनाधृष्यायथासथर अपसव्यं ॐ अ
द्यामुकगोत्रामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणानिमित्त
कनारायणबलौ विहितपंचश्राद्धे पंचमे प्रेतपिंडे जलधारा ते उपतिष्ठतु ५ इति तिल
यवदुग्धसर्वौषधीतुलसीदलहिरण्यामिश्रोदकेनदक्षिणहस्तशंखेनजलधारांदद्यात् ।
ततस्तेनैवोदकेन ॐ अद्यामुकगोत्रामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थ
ममुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्राद्धे पिंडोपरि इदमुदकमुपतिष्ठतु
एवंत्रिवारंकुर्यात् । ततः पिंडमाघ्रायउत्थापयेत् पिंडाधारकुशानुल्मुकंचवह्नौक्षिपेत्।
सव्येनार्घ्यपात्रचतुष्टयंसंचाल्याऽपसव्येनपंचमार्घ्यपात्रमुत्थाप्य सव्येन कुशत्र
ययवजलान्यादाय दक्षिणाद्रव्यंचादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्ववि

मुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्रा
द्धेकृतैतद्ब्रह्मणःश्राद्धप्रतिष्ठार्थं इदंहिरण्यं अग्निदैवतं यथानामगोत्रायब्राह्मणायदक्षि
णांदातुमहमुत्सृजेइतिदक्षिणांदद्यात् एवंविष्णुरुद्रयमादीनां ततोऽपसव्यं मोटकाद
निदक्षिणाद्रव्यंचादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तम
लोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्राद्धे कृतैतत्प्रेतस्य
श्राद्धकर्मणःप्रतिष्ठार्थमिदंरजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणायदक्षिणां दा
तुमहमुत्सृजे। ततःकलशसंकल्पः ॐअद्यामुकगोत्रस्या मुकप्रेतस्यप्रेतत्वनिवृत्त्यो
त्तमलोकावाप्त्यर्थंअमुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्राद्धे ब्रह्मलो
कप्राप्त्यर्थं ब्रह्मप्रीत्यर्थंतीर्थवारिपूरितंसफलंवस्त्रोपवीतान्नप्रतिमानालिकेरसहित
मिमंताम्रकलशंब्रह्मदैवतं ब्रह्मसूक्तजापिनेऽमुकगोत्राय अमुकशर्मणे ब्राह्मणाय

तुभ्यमहं संप्रददे । तेन ब्रह्माप्रीणातु १ । एवं विष्णुरुद्रयमानां च तत्तल्लोकावा
प्त्यर्थंतत्तद्देवताप्रीत्यर्थं तत्तत्सूक्तजापिनेदद्यात् । तत्र चात्र यमलोकनिवृत्त्यर्थ
मितिज्ञेयं अद्यामुकगोत्रस्येत्यादि पंचश्राद्धे प्रेतलोकनिवारणार्थंतीर्थवारिपू
रितमित्यादि ॥ भूमिं सस्यवतीं धेनुं सुवर्णं च तिलान् क्रमात् वृषभं सहि
रण्यं च पंचश्राद्धेषु दक्षिणाः १ । ततोनारायणबलिसांमतासिद्ध्यर्थं ऋग्वेदिने स
स्योपेतांभूमिं यजुर्वेदिनेपयस्विनींधेनुं सामगायसुवर्णं अथर्ववेदिनेतिलसहितं लो
हंच दक्षिणांदद्यात् । उत्तमदक्षिणाभावेसर्वेषांतुष्टिकरंयथाशक्तिहिरण्यंवादद्यात् ।
ततोयथाशक्तिपददानंघृतपात्रदानंतिलपात्रदानादिकंचकार्यं ॐ देवताभ्यर्च
त्रिर्जपेत् ततोपसव्येऽन्नपाणिनादीपंनिर्वाप्य हस्तपादप्रक्षालनमाचमनंचकुर्यात ।
ॐ प्रमादादितिपठित्वाविष्णुंस्मरेत् । श्राद्धीयवस्तूनिब्राह्मणायप्रतिपादयेत् ।

य॰ना॰ जलेवाक्षिपेत् । अद्येत्यादि॰ नारायणबलिकर्मणःसांगतासिद्ध्यर्थं यथाशक्तिब्राह्म बलिः
॥३८॥ णान्भोजयिष्ये ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थममुकदुर्मरण
निमित्तकनारायणबलिकर्मणिन्यूनातिरिक्तदोषपरिहाराय नानानामगोत्रेभ्यो ब्राह्म
णेभ्यो दीनानाथेभ्यःअंधपंगुभ्यःयथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजे अन्य
गोशय्यादिनाब्राह्मणान्संतोष्यानेनकर्मणाश्रीभगवान्विष्णुरिमं प्रेतं शुद्धमपा
पमगर्हितंकरोत्वितिवाचयित्वा स्वयंस्नात्वा गृहेगत्वा गणपतिंसंपूज्यपुण्याहंवाच
यित्वा गुडशर्करापायसादिस्वजनैःसहभुंजीत । शुभमरणस्यापिअयंविधिर्यथासं
भवंकृत्वापारलौकिकंकुर्यात् । छागलेयः—नारायणबलिःकार्योलोकगर्हाभयान्नरैः ॥
तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः॥व्यासः-नारायणंसमुद्दिश्यशिवंवायत्प्रदीय ॥३८॥
ते ॥ तस्यशुद्धिकरंकर्मतद्भवेनैतदन्यथेति । सचात्मघातादिप्रायश्चित्तंकृत्वाकार्यः हे

माद्दौषाड्विंशन्मते । कृत्वाचांद्रायणंपूर्वंक्रियाकार्यायथाविधि । नारायणबलिःकार्यो लोकगर्हाभयान्नरैः ॥ पिंडोदकक्रियापश्चाद्वृषोत्सर्गादिकंचयत् । एकोद्दिष्टानिकुर्वीत सपिंडीकरणंतथेति। नारायणबलिःकार्योलोकगर्हाभयान्नरैः । एकादश्यांचशुक्लायांपं चम्यांश्रवणेनवेति। एतेषामन्यतरेकालेपूर्वेद्युःतदहरेववादुर्मरणजनितदोषपरिहारार्थं प्रायश्चित्ताचरणंकुर्यात् । देवराजदेवीयेतु – नारायणबलिक्रियाधिकारार्थंवीरभो जनमप्युक्तम् । तत्रसंक्षेपेणप्रयोगः देशकालौसं॰ अमुकनामधेयस्यदुर्मरणदोषनि वृत्तिपूर्वकप्रेतत्वविमोक्षार्थंनारायणबल्यधिकारार्थंचवीरभोजनंकरिष्ये । द्वादशाष्ट चतुरोवाविप्रान्संपूज्यभोजयेत्। भोवीरस्वरूपब्रह्मन्निदमासनम्। रक्तगंधकरवीरपुष्प सिंदूरधूपदीपादिभिःसंपूज्य पात्रेअन्नंपरिविष्य अभ्युक्ष्य भोवीरइदमन्नंपरिवि ष्टंपरिवेष्यमाणंचातृप्तेःस्वाहा हव्यंनममेत्युक्त्वाजलंविसृज्यप्रार्थयेत्। पृथिव्यांतमा

तावीराः॥प्रेतमोक्षप्रदायकाः प्रलयानलमुख्यास्तेगृह्णंत्वन्नादिकल्पितम्॥१॥येत
स्थितावीराःप्रेतापिंडविधायकाः॥यातुधानास्तुतेप्रेतमन्नमश्नंतुकल्पितं॥२॥येद्यौलोक
स्थितावीराःप्रेतस्यगतिकारकाः ॥ मयाकल्पितमन्नादिप्राश्नंतुपूजिताःसदेतिप्रार्थ्य
भुक्तवत्सुद्विजेषुदक्षिणांतांबूलंचदत्वा नमस्कृत्याशिषोगृहीत्वाविष्णुंस्मरेदितिवीर
भोजनविधिः॥मिताक्षरास्मृत्यर्थसारयोर्होमतर्पणबलयोनोक्ताः।ततःप्रातिदैवतंत्रिवि
धंत्रिविधफलंसमर्प्यशर्करामधुघृतगुडानिनिवेद्य पिंडानभ्यर्च्यविसर्जयेदित्यत्रविशे
षांतरंश्राद्धचिंतामणिश्राद्धसागरदेवजानिनिर्णयस्मृतिकौस्तुभस्मृत्यर्थसारमिताक्ष
रानारायणभट्टकृतांत्येष्टिपद्धतिविश्वनाथीक्रियापद्धतिसंस्कारप्रकाशनिर्णयसिंध्वा
दिषुज्ञेयम्।इतिश्रीगदाधरदीक्षिताद्यंत्येष्ट्युदाहृतयार्त्किंचिच्छौनकबौधायनगारुडा ॥३९॥
नुसारी समंत्रकनारायणबलिप्रयोगः समाप्तः ॥

॥अथ सामग्री लिख्यते॥ ॥१६॥ प्रायश्चित्तगोदान मृत्तिका गोवर ५ कुशामुठा २५ ॥ सेर चावल २ सेर तिल २ सेर जव घसा चंदन धूप बत्ति ६ दीपबत्ति मालाफूल १ । सेरपेडा बतासा । ऋतुफल ५० पान १०० सुपारी ६ वर्णि ६ वस्त्र ६ उपवस्त्र ६ आसन ६ लोटा ६ लोटिया ६ आचमनी ६ पवित्री ७ नारियर १ सफेदवस्त्र थान ६ कलश तांबेका ६ ढकना पंचपल्लव पंचामृत पंचगव्य पंचरत्न सप्तमृत्तिका १ सर्वौषधिपै ७ सोनेका टूक १ प्रतिमा सोनेकी १ कासेकी थालि ६ धोती ६ डुपट्टा १ तांबेका कोपर १ वटलोही सँडसी चिमटा पंखा ३ सेरघृत खांडअधासेर २ सेर दूध १ शंख पीली सरसों पैसाभर ३५जनेउजोडा सुतअधेलाभर शहत छटाक ११ आमान्नसेर २२ एकादशदान सोना वस्त्र चांदी ग्रुड घृत नोन लोहदंड तिलधान महिषी चवर १२५ दोनीया छोटी ५० पतापत्तल छोटी २५ प्रतिमा सोनेकी प्रतिमा

चांदीकी प्रतिमातांबेकी प्रतिमालोहेकी प्रतिमासीसेकीवाकुश ऋग्वेदिनेभूमिःयजुर्वेदिनेपयस्विनीं सामवेदिनेसुवर्णम् अथर्ववेदिनेतिललोहम् पददानम् १३ आसन १३ जूता १३ छाता १३ पवित्रि १३ पात्र उपपात्र १३ थालीकांसेकी १३ नया पीडा १३ वस्त्र उपवस्त्र १३ पेडातिलपात्रदान छायापात्रदान आचार्यदक्षिणा ब्राह्मणभोजन इतिसामग्री ॥

॥ इति नारायणबलिः समाप्तः ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासतनयखेमराजश्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा
प्रकाशितम् । शके १८२२ संवत् १९५७

# विक्रय्य पुस्तक.

| नाम. | की. रु. आ. | नाम. | |
|---|---|---|---|
| संस्कारभास्कर ( यजुर्वेदी सब संस्कारों की विधि प्रयोग और मंत्रसहित ) | २—१२ | दशकर्मपद्धति ( दशोसंस्कार ) .. | |
| जन्मदिनपूजापद्धति. .. .. .. | ०—२ | वासिष्ठीहवनपद्धति .. .. .. | |
| गोदान पद्धति. .. .. .. .. .. | ०—१॥ | लंबोदरीहवनपद्धति .. .. .. | |
| पूजापंकजभास्कर. .. .. .. .. | २—० | एकोदिष्टश्राद्धप्रयोग .. .. .. | |
| सकामाशिवपूजन विधान भा.टी. .. | ०—४ | पार्वणश्राद्धप्रयोग .. .. .. .. | |
| स्वस्तिवाचन ( पुण्याहवाचन ) .. | ०—१॥ | उपाकर्मपद्धति ( श्रावणीयजुर्वेदकी ) | |
| | | कर्मविपाकचरणगत रफ़ १० आना ग्लेज | |

जाहि-

॥४१॥

| नाम. | की. रु. आ. |
| --- | --- |
| कर्मविपाक भाषाटीका .. .. .. .. | १–४ |
| वेदोक्तवास्तुपद्धति. .. .. .. | ०–६ |
| व्रतोद्यापनकौमुदी. .. .. .. .. .. | ०–१२ |
| दानसंग्रह सब प्रकारके दानकी विधि है | १–४ |
| कुंडविंशति ( कुंडकेवीसग्रंथहै ) .. | ०–१२ |
| सर्वदेवप्रतिष्ठासंग्रह पं० रामलालजी षट्शास्त्रीकृत ( प्रतिष्ठाकरानेका ऐसा ग्रंथ आजतक अन्यत्र नहीं छपा ) | २–० |
| विवाहपद्धति मूल बडे अक्षरोंकी .. | ०–६ |

| नाम. | |
| --- | --- |
| यज्ञोपवीत मूल .. .. .. .. | |
| तथा भाषाटीका .. .. | [illegible]३ |
| नवरत्नविवाहपद्धति | |
| वैवाहपद्यावली ( नोतनी अर्थात वि[illegible] तीमें कहने योग्य दोनों पक्षके श्लोक भाषाटीका .. .. .. .. .. | |
| ज्येष्ठाशांति .. .. .. .. | |
| पंचचकशांति .. .. .. | |
| नवग्रहविधानपद्धति .. .. .. | |

:यजु
आस
नया
[illegible]पार्टी[illegible]ार्यदक्षिणा

वलिः

॥४०॥

| नाम. | की. रु. आ. |
|---|---|
| जलोत्सर्गप्रकाशवापी, कूप, तड़ागादिका उ० | १-१२ |
| तुलसीविवाहपद्धति | ०-२ |
| शूद्रविवाहपद्धति | ०-४ |
| प्रपंचसारविवेक | १-० |
| अंत्येष्टयर्क-यजुर्वेदिय प्रेतकृत्यका अत्यंतउपयोगी ग्रंथ | २-० |
| नित्यतंत्र भाषाटीका | ०-१२ |
| पार्वणश्राद्धपद्धति भाषाटीका | ०-४ |
| एकोदिष्टश्राद्धपद्धति भाषाटीका | ०-३ |

| नाम. | |
|---|---|
| नवग्रहकाण्डी (नित्यपूजाविध | |
| वरदगणेशपूजा | |
| वृद्धिश्राद्ध ( नान्दीमुख ) | |
| संध्यायजुर्वेदी मूल ।।आ०और भाषाटीका | |
| श्राद्धप्रकाश ( जिसमें गौड़ ब्राह्म श्राद्धोंसे लेकर शूद्र श्राद्धों श्राद्ध मात्रके निर्णय और पद्ध रीतिसे कही हैं कि श्राद्ध विषय अन्य ग्रंथ ऐसा नहीं ) | |

जाहि- ॥४२॥

| नाम. | की. रु. आ. |
|---|---|
| सन्ध्यावन्दन तीन टीकाओं समेत .. | ०—६ |
| संध्यावैष्णवी. .. .. .. .. .. | ०—१ |
| क्षत्रियसंध्या .. .. .. .. .. | ०—१ |
| वैश्यसंध्या; .. .............. | ०—१ |
| कात्यायनी तर्पण .. .. .. | ०—१॥ |
| नित्यकर्मपद्धति .. .. .. .. | ०—२ |
| नारायणवलि .. .. .. .. | ०—६ |
| कुशकंडिकाभाष्य .. .. .. .. .. | ०—४ |
| सर्वपूजा .. .. .. .. .. .. | ०—२ |

| नाम. | |
|---|---|
| शिवार्चनपद्धति [ वेदोक्त ] .. | |
| रुद्रविधानपद्धति .. .. .. | |
| कात्यायनीशांति .. | |
| यजु० आह्निक(प्रातःकालसेशयन वि केमर्क ) .. .. .. .. .. | |
| पंचयज्ञ संस्कृतटीका सहित .. .. | |
| पंचयज्ञ भाषाटीका .. .. | |
| देवऋषितर्पण .. .. .. | |
| प्रैतमंजरी भाषाटीका .. | |

:यजु आस ३ नया ार्यदक्षिणा

सलिः ॥४०॥

पुस्तक मिलनेका ठिकाना—खेमराज श्रीकृष्णदास, “श्रीवेङ्कटेश्वर” छा...

